# विद्वन्मोदतरङ्गिणी

गद्यपद्यमयात्मकं काव्यम् ।

महामहोपाध्याय-श्रीचिरञ्जीवकविना

विरचितम् ।

---

कलिकातानगरे

अशेषविद्योत्साहिना

श्रीयुक्तबाबुभुवनचन्द्रवसाकसंस्थापित

संवादज्ञानरत्नाकराख्ययन्त्रे तद्द्वारैव १८२८ संवत्सरे

मुद्रितम् ।

निमतलाघाट ष्ट्रीट ८ संख्यक भवने ।

# विद्वन्मोदतरङ्गिणी ।



## अथ प्रथम स्तरङ्गः ।

तमोगणविनाशिनो सकलकालमुद्योतिनी
धरातलविहारिणी जड़समाजविद्वेषिणी ।
कलानिधिसहायिणी लसदलोलसौदामिनी
मदन्तरऽवलम्बिनी भवतु कापि कादम्बिनी ॥

दक्षो दक्षोपमेयः समजनि जनितारम्भसम्भावनीयो
रक्षोऽवक्षोभभीतप्रथितजनपदो रक्षितो येन गौड़ः ।
यस्याशीर्व्वाददूर्व्वादलकलितशिखो भूपतेर्यज्ञयूपः
संयातोऽनेकशाखः स्फुटमिव निगमो व्यासतोव्यासमाप्तः

क्रियादक्षस्य दक्षस्य राढ़ापुरनिवासिनः ।
सौजन्यजनिता कीर्त्तिर्गौड़देशमपूरयत् ॥

तस्य काश्यपगोत्रस्य काश्यपस्येव सन्ततिः ।
प्रचुरा गौड़देशीया कुलोनाग्रसराभवत् ॥

ब्राह्मण्याचारधराचरणरसवगो हंसरूपोऽस्य वंशे
काशीनाथाभिधानः समजनि विनतोगेषु च ब्राह्मणेषु
नानीय प्रयत्नाद्द्विजचरणरजो मूर्द्धि विन्यस्तमातम्

पुत्रादेरत्र सिद्धौषधमिव सहसाऽनेकरोगान् जहार
सामुद्रके सोऽय समुद्रकल्पःसामुद्रकाचार्य्य इतिप्रसिद्धम्
लेभे नृनामाकृतिदर्शनेन फलं वदन् भूतभविष्यदादि
अथ तस्य त्रयः पुत्राः जाताः पितृपरायणाः
राजेन्द्रोराघवेन्द्रश्च महेन्द्रश्चेति ते क्रमात् ।
तेषामेव गुणोत्तरः समजनि श्रीराघवेन्द्रःकृती
बाल्ये यं समुदीक्ष्य लक्षणयुतं तातोऽनुरक्तोऽभवत्
लेभे षोड़शवार्षिकः कृतिमतामानन्दवृन्दाङ्कुरो
भट्टाचार्य्यशतावधानपदवीं यस्तोर्णविद्यार्णवः
बाल्येऽधीत्य समस्तशास्त्रमभितः सिद्धान्तवागीशतो
वागीशप्रतिमो बभूव विजयी वादेषु विद्यावताम् ।
यस्यास्वाद्य सरस्वती रससुधाधारैकसारागिरो
मुर्द्धान्दोलनशालिनो हि कवयो गायन्ति नित्यं यशः
एकैकसेकैककविप्रयुक्तं श्लोकस्थितं वर्णमपव्यवस्थम्
आकर्ण्यतत्संख्यमथ प्रयुङ्क्ते स्वयङ्कृतश्लोकशतञ्चवर्णान्
रीत्यानयाश्लोकशतं कवीनां शृतस्यनिर्व्यक्तमवधारयित्वा
समस्यया पूर्त्तिमतीमथैनां स्वयङ्कृतश्लोकशतींतथैव
अतोऽभिधानेन शतावधानो बभूव लोकेविदितप्रभावः
रनन्यसाधारणशक्तिशालीसंख्यावतां संसदि माननीयः
स्तुलर्थसार्थानवबोधहेतोर्महान्धकारे पततां चिराय
सञ्चारहेतोर्विविधक्रियायैमन्त्रार्थदीपं कृतवान् कृतं

नानाव्यवस्थाभ्रमवन्तमन्तर्विद्विद्विचारोच्छलदुत्तराङ्गम्
यः कालतत्त्वार्णवमुत्तरीतुं रामप्रकाशं निबबन्ध सेतुम्

यस्य च कविद्वयकृतमेतत् श्लोकद्वयम्-

अहं हरिहरः सिद्धेरवलम्बा सरस्वती।
साक्षात्कृतावधानत्वम् अवतीर्णा सरस्वती
पुंरूपादर्शिनी साक्षादवतीर्णा सरस्वती।
जितः शतावधानोऽतो विष्णुनापि न जिष्णुना

किञ्च अधीयानमुद्दिश्य चाध्यापकोऽयम्
भवानन्दसिद्धान्तवागीश ऊचे।

अथ कोऽपि देवोऽनवद्यातिविद्या-
चमत्कारधारामपारां बिभर्त्ति
तस्मादहं समुत्पन्नो महापुरुषतः पुमान्
धामैकनिधितः सूर्यात् किरणैककणो यथा
विचार्य्य तारकं चक्रं पिता मे करुणापरः।
सन्नाम वामदेवेति कृतवान् नामकर्म्मणि
नाम्नैवसम्बोध्य जनः कथायां यदेतमाकारयिता तदाशीः
ताताग्रजो मामतिवत्सलत्वाच्चिरं चिरञ्जीवतयाजुहाव

सोऽहं पुरा समधिगत्य पितुः प्रसादं
ब्रह्मैकतां गतवतः शिवराजधान्याम्॥
यत्नादधीतमनधीतमथापि शास्त्र-
मध्यापयामि निभृतं निपुणं विचार्य्य॥

न्यायादिशास्त्रेषु मयाकृतायेकाव्येषु येवारुचिराः प्रबन्धाः
भवन्ति विद्यासु च यासु यासु येयेवुधास्तत्परिपोषकास्ते
सम्प्रत्यसौसर्व्वमहीसुराणामपण्डितानामपि सन्मतीनाम्
विलासहेतोरपि पण्डितानां विरच्यते क्रोऽपि मया प्रबन्धः
पुनः पुनः पण्डितमण्डलीं तां याचेयया भूरपि मण्डितेयम्
मात्सर्य्यमुत्सृज्य कृतिं ममैतां सर्व्वे भवन्तोऽपि विलोकयन्तु

जाने कदाचिदपि नैव शिवस्वरूपात्
तातात् परं परमदैवतमन्यमत्र ।
तस्मादिमां कृतिमिहाद्य तरङ्गिणीत्वे
पाद्याय तच्चरणयोः परिकल्पयामि ॥

एतां मदीयामवगाह्य सम्यक् तरङ्गिणीं शुद्धधियो मनुष्याः
विद्यार्णवालोडनमन्तरेण भवन्तु षट्शास्त्रमतप्रवीणाः
द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिस्सुतो
भट्टाचार्य्यशतावधान इति यो गौड़ोद्भवोऽभूत् कविः
विद्वन्मोदतरङ्गिणीं ननु चिरञ्जीवेन तज्जन्मना
शास्त्रे या रचितोचितः प्रथमकस्तस्यास्तरङ्गो गतः

इति श्रीमहामहोपाध्याय-श्रीचिरञ्जीवभट्टाचार्य्य-विरचित-
विद्वन्मोदतरङ्गिण्याम् प्रथमस्तरङ्गः समाप्तः ।



## अथद्वितीयस्तरङ्गः ॥

अथ समाहूताः पुरुहूतपुरोहिता इव विद्वांसः क्रमशः प्रविशन्ति स्म ।

तत्र प्रथमतः प्रविशन्तं वैष्णवमालोक्य कोऽप्येकः सकलजनाभिज्ञो विदितपरतत्त्वो निजगाद प्रभुम्

आनाशमूर्द्धतिलको बङ्कशङ्खचक्र-
पद्माङ्कितोज्ज्वलवपुर्धृतपीतवासाः ।
कण्ठे ललामतुलसीस्रजमादधानः
श्रीमानयं हरिकथां कथयन्नुपैति ।

प्रविश्य च वैष्णवः-

इषन्मुद्रितलोचनो दृढतरप्रारब्धयोगासनो
यद्ब्रह्मादिसुरेन्द्रवन्दितपदः शम्भुः स्वयं ध्यायति
वैकुण्ठैकनिकेतनं जगदपि व्याप्य स्थितं लीलया
तद्ब्रह्माख्यवपुः सदैव मुदितं त्वच्चित्तमालम्बताम्
इत्यूचे ।

अथायान्तं शैवमालोक्याह सः-

श्रीमानसावेति जटालमौलिर्व्याघ्रत्वगालम्बितमध्यभागः
भूतिसम्भूषितभास्वदङ्गो रुद्राक्षमालाकलितोर्द्ध्वदेहः

प्रविश्य च शैवः-

[illegible]ायन्ति सदासमस्तनिगमा ध्यायन्ति यं योगिनो

यस्मान्नामधिगत्य दैवतगणाः कुर्व्वन्ति सृष्ट्यादिकम्
सोऽयं त्वामवतात् निराकृतिरपि त्रातुं जगत् साकृतिः
ध्यायन् स्वं स्वयमेव सर्व्वजगतीमिच्छाकरः शङ्करः ।

इत्यूचे ।

अथायान्तं शाक्तमालोक्याह सः-

जवापुष्पं मूर्द्धि, स्रजमुरसि मल्लीसुमनसां
ललाटेऽप्यारक्तं तिलकमनुषिक्तं मलयजम् ।
दधानः सानन्दं निजहृदि परब्रह्ममहिषीं
समायातः साक्षादपर इव राकापतिरयम्

प्रविश्य च शाक्तः

यामासाद्य विधीयते हरिहरब्रह्मादिभिर्दैवतैः
स्वीयं स्वीयमतीवदुष्करतरं कर्म्म क्षणाल्लीलया ।
सा दुर्गा भवरीतिभीतिशमनी लोकत्रयात्तारिणी
भूयाद्वः प्रतिपक्षपक्षदलनी वाञ्छाफलोल्लासिनी ॥

इत्यूचे ।

अथायान्तं हरिहराद्वैतवादिनमालोक्याह सः

अयमितस्तुलसीदलमालयाकलितभस्मललामकलेवरः ।
हरिहरैक्यरणीकरवाणितावितिविभावनाभाषणतत्परः

आगत्य सः-

ब्रह्माविष्टमनाः सदैव कमलासक्तोऽविषादो वि[illegible]
कावासोऽथ विभूतिमान् गिरिवराधारोऽभयाव[illegible]

सर्पाधीशधरो विषुङ्गवचरो लोकत्रयानन्दको
भूयाद्वो हृदयं गतः प्रतिलवं कृष्णोऽथवा शङ्करः ॥

इत्यूचे।

अथायान्तं वैशेषिकदत्तहस्तावलम्बनं नैयायिकमालो-
क्याह सः-

परिकल्पिततर्कपरम्परयाविदुषः कलयंस्तृणतुल्यतया
अयमेति गिरामधिदेवतया सहितो रसनोपरि खेलि-
तया

आगत्य च सः-

यः सृष्टिस्थितिसंहृतीर्वितनुते ब्रह्मादिमूर्त्तित्रिकैः
यस्याधीनतयास्थितानिसदसत्कर्म्माण्यपिप्राणिनाम्।
नित्येच्छाकृतिबुद्धिमानथ परो जीवात् परात्मा स्वयं
सोऽयं वो विदधातु पूर्णमचिराच्चेतोगतं यद् भवेत्।

इत्यूचे।

अथायान्तं मीमांसकमालोक्याह सः-

वेदार्थतत्वेषु गतान्धकारो दृढव्रती यज्ञगृहीतदीक्षः।
अधीत्य तत्कर्म्मविधानमिच्छां समेतिशिष्येषुसुशिक्षितेषु

आगत्य सः-

येनाभवच्छतमखोऽधिपतिः सुराणां
येनाप्यवं दिनकरोऽधिपतिर्ग्रहाणाम्।
त्वं येन भूमिवलयेऽधिपतिर्नराणां

तस्मिन् पुनर्भवतु कर्म्मणि प्रयत्नः ॥

इत्यूचे ।

अथायन्तं वेदान्तिनमालोक्याह सः-

प्रोताधिरूढो भुवनाम्बुराशौ समस्तभोगैकनिरस्तचेताः ।
अस्मान्परित्रातुमयं पुरस्तात् काषायवासाःसमुपैति-
दण्डी ।

आगत्य सः-

यस्मिंस्त्रैलोक्यमेतन्महसि दिनपतिर्वारिवद्भासमानं
त्वस्माद्भ्रायमित्थं व्यवहरति यदज्ञानतः सर्व्व एव ।
विज्ञानानन्दरूपं विमलसवदितं सर्व्वगाम्यद्वितीयं
नित्यञ्चापेत्यमायांकलयतुसहसा तद् भवान् स्वस्वरूपम्

इत्यूचे ।

अथायान्तौ सांख्यपातञ्जलवेत्तारौ वीक्ष्याह सः-

इमावुभौ पूर्व्वशरीरमांसला-
वतः शरीरेऽपि कसूक्ष्मतां गतौ ।
समानभावौ सितनिर्म्मलेक्षणौ ॥
समागतौधामनिधीसुयोगिनौ ॥

आगत्य च तौ-

पद्मपत्राम्बु निर्लेपपुरुषस्यानुकारिणी
प्रकृतिस्ते महत्तत्वं संवर्द्धयतु सर्व्वदा
भ्रमन्त्यां फणिनिभायां शिवमुपगतायां य आनन्दभरः

भवति स एव सततं समनुभूयतां भवतापहरः ॥

इत्यूचतुः ।

अथायान्तं पौराणिकमालोक्याह सः-

प्रत्यर्चकोऽसौ प्रखरः प्रवक्ता जिह्वाग्रसंसर्गिकथाप्रवाहः
प्रशान्तचेता धृतशुद्धवासाःसमागतः सन्ततधर्म्मकर्मा ॥

आगत्य सः-

वेदा येन समुद्धता वसुमती पृष्ठे धृताप्युद्धृता
दैत्येशो नखरैर्हतः फणिपतेर्लोकं बलिः प्रापितः ।
क्षात्रं च्छत्रं वा जगती दशास्यरहिता माता कृता रोहिणी
हिंसा दोषवती परास्ययवना पायात् स नारायणः

अथ च

ईशः स एकोदशधा विभक्तोदुर्गोसहस्राकृतिसंविभक्ता।
पयोनिधेरुद्गतरत्नपूरसमानि रत्नानि तवातनोतु ॥

इत्यूचे ।

अथायान्तं ज्योतिर्विदमालोक्याह सः

ज्योतिर्विदेष विदिताखिलकालतत्वः
सत्वानुकम्पनकृते कृतदूरदृष्टिः ।
जानन्ननेकविधभूतभविष्यदादि
सर्व्वज्ञकल्पपरिकल्पितधीरुपैति ॥

आगत्य सः —

...रः स्फुरपटं रुचिं हिमरुचिः सम्मङ्गलं मङ्गलो

बोधं बोधनमातनोतु ललिता वाचश्च वाचस्पतिः ।
काव्यः काव्यकला कलापनिरतिं मन्दोद्विषन्मन्दतां
दुर्वृत्तेषु तमस्तमोजयकरीं केतुश्च केतुश्श्रियम् ।।

इत्यूचे ।

अथायान्तमा युर्वेदविदमालोक्याह सः-
वद्योऽनवद्यः स्वगुणैरगाधैः सिञ्चन्निवेन्दुः सुधयाजगन्ति
स्फुरद्रुजामायुरिव प्रदीमं व्याधेरतिव्याधि रिमायमेति
आगत्य सः-
प्रजाचकोरायितहङ्स्मगाङ्करूपेणकामेश्वरतुल्यमूर्त्तेः ।
स्वत्स्यस्तु ते सर्व्वशाय नित्यसर्व्वैकचिन्तामणये नृपाय

इत्यूचे ।

अथायान्तं वैयाकरणमालोक्याह सः-
आलापकालापकदुर्गसिंह
यः काशिकायामपि काशिकेशः ।
शेषावतारः श्रुतपूर्व्वकीर्त्तिः
स एव वैयाकरणोऽभ्युपैति
आगत्य च सः-
आख्यातकृत्यचयतद्धितसर्व्वलोक
सत्कर्म्मकारकसमासनसन्निविष्ट ।
सत्सन्धिकङ्कवपरोद्भृतदुर्गसिंह
विक्रान्तिमेहि वह पाणिनिनिष्टभारम् ।

इत्यूचे।

अथायान्तम् अलङ्कारिकमालोक्याह सः-

वृत्तरीतिकलनैकदक्षिणो गद्यपद्यरचनाविचक्षणः।
एष पश्य पुरतो महाकविर्नर्त्तयन्निव समेति भारती॥

आगत्य च सः-

शृङ्गारहास्यसहिताद्भुतवीररौद्राः।
सम्प्राप्य कालमुचितं भवतो भवेयुः।
किन्तु द्विषां गिरिदरीविनिवासभाजां
बीभत्सभूरिकरुणाभयशान्तयः स्युः॥

अथायन्तं नास्तिकमालोक्याह सः-

सम्मार्जितक्षितिन्यस्तपादो हिंसाभयादयम्।
नास्तिकोऽत्र समायाति समुल्लुञ्चितमूर्द्धजः॥

आगत्य च सः-

देवानर्चय सञ्चय प्रतिदिनं पुण्यानि जन्मान्तरे
भोगाय प्रमती महाक्रतुविधौ स्वर्गाय हिंसां कुरु।
इत्थं वञ्चकवञ्चनोत्पथगता बुद्धिस्त्वदीया चिरात्
प्रत्यक्षपदार्थसार्थरहितं पन्थानमारोहतु॥

इत्यूचे।

अथ सोपहासं सर्वे हसन्ति स्म। आः पापी दुरात्मा क्वासौ कुत आगत इति प्रकटं जगदुः।

अथ नास्तिकः-

स्मा: पापोऽहं दुरात्मा, भवन्तः पुनः पुण्यशीलाः ये घ्नन्ति निरर्थकं पशून् ।

मीमांसकः साटोपम् पश्य रे मूढ !

स्वर्या गतिः क्रतुहतस्य पशोश्च तस्य
तुष्यन्ति दैवतगणाः परिवारवर्गैः ।
स्वस्यापि वाञ्छितफलानि भवन्ति नूनं
पापाय किं भवति यद्विधिजातहिंसा ॥

नास्तिकः स्माः, व्यामोहः-

स्वर्गः कुत्र ! कुत्र च दैवतकुलम् कुत्राथ जन्मान्तरम् ?

मीमांसकः-

हंहो वेदपुराणशास्त्रविलसद्वस्तूनि किं निन्दसि !!

नास्तिकः-

प्रामाण्यं किमु यान्ति वञ्चककृता वेदाः पुराणादयो
ये चातीन्द्रियसर्ववस्तुकथया वञ्चन्ति सर्वं जगत् ।

मीमांसकः-

अयमहो विनव कर्म सुखदुःखादिभोगी पुरुषः ?

नास्तिकः-

अहो कुत्र कर्म, केन दृष्टं कदा केन वा उपार्ज्जितम् ।
जन्मान्तरकृतमिति चेत् तदेव नास्ति, प्रमाणाभात् ।
सुखदुःखादिकं पुनः प्रवाहधर्मतया शरीरिणामनियत
वस्तुतो जगदेतदसदिति सर्वमिदं भ्रम एव ।

इत्याकर्ण्य सचकिते तुष्णीम्भूते मीमांसके, वेदान्ती-अथ जगदेतन्मिथ्यैवेति सत्यमुक्तं श्रीमद्भिः, परमेकं ब्रह्म सत्यभूतमास्ते यस्मिन्नेतन्मिथ्याभूतमपि सत्यतया प्रतिभाति।

नास्तिकः-

साधु रे! साधु! किञ्चिन्मन्मतप्रविष्टोऽसि, परन्तु कीदृग् तद्ब्रह्म भवताम्?

वेदान्ती-

क्रियाहीनं निराकारं निर्गुणं सर्व्वगं महः।
तद्ब्रह्म परमानन्दमवाङ्मनसगोचरम् ॥ २२ ॥

नास्तिकः-

जगन्मृषैवेतिभवन्मतञ्चेत्किं कल्प्यते ब्रह्मनिरर्थकं तत्।
आकारशून्येन गतक्रियेण कर्त्तव्यमेतेन किमस्ति लोके॥

इत्याकर्ण्य चकिते वेदान्तिनि, सस्मितं सर्व्वे तार्किक-मुखमालोकयन्ति स्म।

द्वैताद्वैतमतादिनिर्णयविधिप्रद्योद्बुद्धबुद्धिस्सुतो
भट्टाचार्य्यशतावधान इति यो गौडोद्भवोऽभूत् कविः।
विद्वन्मोदतरङ्गिणी ननु चिरञ्जीवेन तज्जन्मना
शास्त्रेया रचिता द्वितीयपदवी तस्यास्तरङ्गो गतः॥२॥

इति महामहोपाध्याय चिरञ्जीवभट्टाचार्य्यविरचित-
विद्वन्मोदतरङ्गिण्यां द्वितीयस्तरङ्गः समाप्तः।

# अथ तृतीयस्तरङ्गः ।

अथ तार्किकः साटोपम्-कथमहो ! किं ब्रूते भवान् स्वमतमपरिष्कुर्वन्नेव ? पश्य-

अभाषयन्नेवनिजोक्तिदोषानन्योक्तिमुक्त्या तरलीकरोषि ।
असुन्दराद्योयमितिब्रुवाणकायोहि हास्यास्पदतामुपैति

अथ नास्तिकः स्वगतम् । आः ! युक्तिधारावर्षिणा-स्माकं पुरतः प्रचण्डसमीरण इवायमुपस्थित इति चिन्तयन्नप्याह-

आकर्णय तावन्मतमस्माकम्. तथा च-शून्यवादी माध्यमिकानाम्; क्षणिकविज्ञानवादो योगाचाराणाम् ज्ञानाकारानुमेयक्षणिकवाह्यार्थवादःसौत्रान्तिकानाम्, क्षणिकवाह्यार्थवादी वैभाषिकाणाम्, देहार्थवादश्चा-र्वाकानाम्, देहातिरिक्तदेहपरिणामवादी दिगम्बरा-णाम्-एवं षट्प्रस्थानानि, तेषामयं सिद्धान्तः-

न स्वर्गो नैव जन्मान्यदपि न नरको नाप्यधर्मो न धर्मः
कर्त्ता नैवास्य कश्चित्प्रभवति जगतो नैव भर्त्ता न हर्त्ता।
प्रत्यक्षान्यन्नमानं न सकलफलभुग्देहभिन्नोऽस्तिकश्चित्
मिथ्याभूते समस्तेऽप्यनुभवति जनःसर्व्वमेतद्विमोहात्

किञ्च-अहिंसा परमो धर्म्मः पापमात्मप्रपीडनम् ।

अपराधीनता मुक्तिः स्वर्गोऽभिलषिताशनम् ॥
स्वदारपरदारेषु यथेच्छं विहरेत् सदा ।
गुरुशिष्यप्रणालीञ्च त्यजेत् स्वहितमाचरन् ॥

तार्किकः, सोपहासं-साधु! रे साधु ! यदि प्रत्यक्षा-न्यन्नमानं तर्हि-

भवादृशे दूरविदेशमागते
चरन्तु वैधव्यविधानसङ्गनाः ।
अदर्शनेनैव यतः शरीरिणो
विदेशयानस्य मृतस्य तुल्यता

नास्तिकः-

अहो मृतस्य न पुनर्दर्शनमिति निश्चयः शरीरा-दिनाशस्य स्वयमेव साक्षात्कारत्वात् विदेशं गतस्य पुनर्दर्शनसम्भावनास्तीति न साम्यम् ।

तार्किकः-

भवत्वेवं विदेशं गतस्य उत्कटकोटिकमृतिसम्भाव-नया कथमर्त्तिर्न भवति ?

नास्तिकः-

पत्रादिद्वारा अधिगतवार्त्तानां कथमर्त्तिः ?

तार्किकः-

आगतमेव तर्ह्यनुमानमपि प्रमाणं तदीयलिप्यादि-द्वारा जीवतस्तस्यानुमानेन नार्त्तिर्भवतीति ।

एवं शब्दस्याप्रामाण्ये आप्तवाक्यादौ विश्वासाभावात् लिखनप्रवृत्तिनिरोधः स्यात् स्याच्च भवादृशां मूकतैव श्रेयसीति, शब्दोऽपि प्रमाणत्वेन स्वीकार्य्य एव श्रीमद्भिः।

नास्तिकः सक्षोभम्-

भवतु नामाऽनुमानं शब्दोऽपि प्रमाणं तथापि कथमीश्वरादिसिद्धिः ?

तार्किकः-

कार्य्यैरनुमीयते स भगवान् कार्य्यञ्च सृष्ट्यादिकम्।
नास्ते चेदयमीश्वरः कथमहो सृष्ट्यादिकं जायते॥

नास्तिकः-

का सृष्टौ परिवेदना यदि पुनः पित्रोरपत्योद्भवः।
कुम्भाद्याः प्रभवन्ति सन्ततममी तत्तत्कुलालादितः॥

तार्किकः-सत्यं सत्यम्।

कर्त्तारौ पितरौ सुतस्य कलसादीनां कुलालादयः।
कर्त्तारो हि यथा तथास्तिकतमः कर्त्ता वने शाखिनाम्॥

नास्तिकः-

जायन्ते स्वत एव ते खलु यथा स्वेदोद्भवाः प्राणिनः।

तार्किकः-

स्यादित्थं वत चेद्विनैव पितरौ पुत्रः स्वयं जायताम्॥

नास्तिकः-

केषाञ्चिद्देहिनामयं स्वभावः-यत् स्त्रीपुरुषसंसर्गां

वोत्पत्तिः, यथा-मनुष्यपशुपक्षिणाम् । केषाञ्चित् पुनर्निनैव शुक्रशोणितसन्निपातं स्वेदादिना, यथा-मशकादीनाम् । केषाञ्चित् पुनः शुक्रशोणितसन्निपातेन तद्व्यतिरेकेण च, यथा-वृश्चिकादीनाम् । केषाञ्चित्पुनर्बीजजलभूमिविशेषसंसर्गेणैव, यथा-तरुगुल्मशष्पादीनाम् । तथा हि-काननवासिनामपि तेषां यदृच्छया पतितामितबीजवारिद्वारिक्षितिसंसर्गादबाधैवोत्पत्तिरिति स्वभाव एव विलक्षणानेककार्य्योत्पत्तौ कारणम् ।

तार्किकः- सत्यं स्वभाव एवायं परन्तु-

समालिकः कोलमहीमहीरुहां
प्रसेचनार्थं घटको यथाम्बुनः ।
तथास्ति कोऽरण्यकृते पयोमुचा-
मचेतनानां घटकः सचेतनः ॥

किञ्चासौ स्वभावः स्व-स्वरूपः ? कश्चिदपरो वा ? स्वपदवाच्योऽपि देहः ? तदन्यो वा ? नाद्यः तत्राद्यमादाय स्वस्यैव प्रति कारणत्वप्रसङ्गात् ; नाप्यन्त्यः द्वितीयमादाय भवन्मते देहभिन्नाभावात् ; यदि देहभिन्नोऽपि कश्चिद्विलक्षणसकलकार्य्यकारी स्वीक्रियते तर्हि स एवास्माकमीश्वरः । अत एव न द्वितीयोऽपि नः यद्वयमपि देहव्यतिरिक्तनिखिलविलक्षणकार्य्य [कार]णमीश्वरं नैव ब्रूमः ।

नास्तिकः-

इयानेवावयोर्मतभेदः यद्भवानीश्वरमेकं नित्यं देह-व्यतिरिक्तं विलक्षणाखिलकार्य्यकारिणं ब्रवीति, अहं पुनर्विलक्षणसकलकार्य्यकर्तॄन् अनित्यान्देहव्यतिरिक्ता-ननन्तानङ्गीकरोमि इति।

तार्किकः सहासम्

धन्याः भवन्तो यदनन्तकर्तॄनः अनन्तकार्य्यं प्रतिकी-र्त्तयन्ति। वयं वदामः खलु सर्व्वकार्य्यकर्त्तारमेकं परमे-श्वरमेव। इत्येतयोर्मतयोः श्रेयस्त्वपर्य्यालोचनं सलोच-नैर्भवद्भिरेव करणीयम्।

नास्तिकः सङ्कुचितमुखः-

भवतु लाघवादेक एव कर्त्ता, परमस्य नित्यतायां किं मानम्?

तार्किकः-

यद्यसावनित्यः कस्तस्योत्पादको नाशको वा? अस्ति, चेत् कश्चित्तादृशोऽप्येकः, तर्हि तस्याप्यनित्यत्वेऽनवस्था-प्रसङ्गः। नित्यत्वे च स एवास्माकमीश्वरः इति।

तूष्णींभूते नास्तिके पुनराह-

विना धर्माधर्मौ रचयति कथं वा स भगवान्
इहानन्दक्लेशैरुपचितमहो! जीवमखिलम्।
जगत्स्रष्टुं सृष्टिं किमपि समदृष्ट्या रचयतो

न रागो न द्वेषः क्वचिदपि जने तस्य जयति ॥

एवं यदि स्वर्गनरकादिकं नास्ति,तदा भवानपि कुतस्त्वद्वन्दनादौ प्रवृत्तः हिंसातो बिभेति ? न हि विना भक्ताभिलाषौ प्रवृत्तिनिवृत्ती, तत्फलमपि नैहिकमनुभूयमानत्वात् ; तस्मात् पारलौकिकमेव स्वर्गनरकादिरूपम्, फलजनकावपि धर्माधर्मौ, नेह जन्मन्येव कृताकृतौ, जन्मत एव फलोदयात् ; तस्मादस्त्येव जन्मान्तरम्। धर्माधर्मौ पुनः प्रतिपादयन्तीश्वर-कृत-श्रुति-तदनुयायिमुनिप्रणीत स्मृतिपुराणादय इति वेदविहितैहिकफलककार्य्यभिचारादिकर्म्मभिर्जायमानवृष्टिशत्रूच्छेदरूपफलैः पारलौकिकफलककर्म्मणोऽपि साफल्यमनुमीयते। एवं तदभिहितग्रहणग्रहोदयादिदर्शनात्तद्दर्शिताऽखिलवस्तुनः प्रामाण्यं सिध्यतीति॥

बौद्धे पुनः युक्तिविहीनबुद्धा-
वावस्थिते विस्मृतबुद्धशास्त्रे।
सोल्लासहासेषु सभाश्रितेषु
भूयः स विद्वान् विजयी जगाद ॥

सिद्धोऽयं परमेश्वरः प्रभुतया सर्गस्थितिध्वंसकृत्
नित्योऽनित्यमतिर्गतिस्तनुभृतां कुर्याज्जगन्मङ्गलम्।
जेतारो वयमद्य नास्तिककुलप्रध्वंसनाद्वेषिणः
[illegible]नीमः सहसा परानऽपि पराभूतांस्तदीयेच्छया ॥

द्वैताद्वैतमतादिनिर्णयविधिप्रद्बुद्धबुद्धिस्सुतो
भट्टाचार्य्यशतावधान इति यो गौडाद्भवोऽभूत् कविः ।
विद्वन्मोदतरङ्गिणी ननु चिरञ्जीवेन तज्जन्मना
शास्त्रे या रचिता तृतीयपदवी तस्यास्तरङ्गो गतः ॥

इति श्रीमहामहोपाध्याय-श्रीचिरञ्जीवभट्टाचार्य्य-विरचित-
विद्वन्मोदतरङ्गिण्यां तृतीयस्तरङ्गः समाप्तः ।

## अथचतुर्थस्तरङ्गः ॥

अथ प्रभुनादिष्टो वैशेषिकरीत्यवलम्बो नैयायिकः स्वमतमाह-

द्रव्यं गुणाः कर्म्म ततः परस्तात्
जातिर्विशेषः समवायनामा ।
भावाः षडेते कथिताः पदार्थाः
सप्ताप्यथैते स्युरभावयोगात् ॥
मही जलं धाममरुन्नभांसि
कालो दिगात्माऽथ मनो नवैव ।
द्रव्याणि युक्त्या कथितानि तानि
नित्यान्यनित्यान्यपि भेदपूर्व्वम् ॥
अथ चतुर्विंशतिसंख्ययोक्ता
गुणा अमी रूपरसौ च गन्धः ।

स्पर्शोऽथ संख्या परिमाणनामा
पृथक्त्वसंयोगविभागसंज्ञाः ॥
परत्वापरत्वे गुरुत्वद्रवत्वे
ततः स्नेहसंस्कारधर्म्मा अधर्म्मः ।
अथ शब्दबुद्धी सुखं दुःखमिच्छा
तथा द्वेषयत्नाभिधानावपीति ॥

कर्म्माणि चोत्क्षेपणनामधेयोऽवक्षेपणाकुञ्चनसंज्ञकानि।
प्रसारणाख्यं गमनाभिधञ्च पञ्चेति गत्याभ्रमणादिलाभः॥
परापराख्यं समवाय्यभेदं द्विधैवसामान्यमिदन्तु नित्यम्।
नित्या विशेषा बहवोऽथ नित्यएकः प्रदिष्टःसमवायएषः।
नभस्वदन्ताःपरमाणुरूपानित्या अनित्याद्व्यणुकादिरूपाः॥
पञ्चापि नित्या गमनादयोऽमीमनोऽणुरेषांविभवःपरेतु॥

कार्य्यात्मकास्ते त्रिविधाधराद्या-
देहेन्द्रियैतद्विषयप्रभेदात् ।
भुवः शरीरं क्षितिलोकवर्त्ति
स्याद्योनिजायोनिजभेदभिन्नम् ॥

द्विधाभवत्येवजरायुजाऽण्डजप्रभेदमासाद्यसदैवयोनिजम्
नृणां पशूनाञ्चवपुर्जरायुजंतदण्डजंपन्नगमीणपक्षिणाम्
अयोनिजापुण्यविशेषभाजोमहर्षयःपातकिनोऽपिकीटाः
इन्द्रियं घ्राणमथोमृदश्ममहीरुहाद्याविषयाःप्रदिष्टाः
रतानाक्षिमहीरुहेषुजीवाश्रयत्वेऽपिविनास्थिमांसै.

चेन्मन्यते केवलजीवयोगात् शरीरितास्तां तदयोनिजेषु
अयोनिजं वारिमहीमरुद्वपुर्धराशसंज्ञव्यवहारसाधनम्
नपुण्यपापात्मककार्य्यकारणं पुराकृतैःकेवलभोगभाजनम्
वपुर्जलीयं वरुणौकसिस्थितंतदिन्द्रियंस्याद्रसनाभिधानम्
नदीनदाम्भोधिहिमादिभेदतोविलक्षणास्तद्विषयस्त्वनेकधा
आदित्यलोके महसःशरीरं तदिन्द्रियं चक्षुरितिप्रसिद्धम्
चतुर्विधस्तद्विषयश्च भौमदिव्योदरीयाकरजप्रभेदात् ॥
वायोःपुरे वायुमयं शरीरं त्वगिन्द्रियं सर्व्वशरीरवर्त्ति
कम्पादिलिङ्गो विषयस्त्वनेकःप्राणादयश्चापरभेदभाजः

एकं नभः सर्व्वगमित्यहन्ति
निष्पत्तिरस्मात् श्रवणेन्द्रियस्य ।
एको हि कालोयमुपाधिभेदात्
नानाक्षणादिव्यवहारसेतुः ॥
एकापि दिक् तत्तदुपाधिभेदात्
प्राच्यादिसंज्ञां लभते विभिन्नाम् ।
आत्मापि जीवेश्वरभेदात्मनो
द्विधादिमोऽनेक इहान्त्य एकः ॥
मनोऽपि नाना प्रतिजीवभेदात्
सुखादिकग्राहकमन्तरिन्द्रियम् ।
अमुष्य योगात् नहिरिन्द्रियाण्यपि
नयन्ति सद्यो विषयान्निजान्निजान् ॥

चतुर्दश क्ष्माजलदेहिनां गुणा
सप्तस्त्वथैकादश मारुते नव।
उदीरिताश्चाष्ट महेशचेतसोः
षड्स्वरे कालदिशोश्च पञ्च ते॥

रूपाद्याः कथितास्त्रयोदश गुणाः संस्कारयुक्ता भुवि
स्नेहाद्याश्च त एववारिणिपुनर्गन्धोज्झिताः कीर्त्तिताः॥
गन्धस्नेहरसोज्झिता गुरुतया हीनाश्च ते तेजसि
स्पर्शो वेगयुतो नभस्वति तथा सप्तापि संख्यादयः॥
संख्याद्याः पञ्चशब्दो नभसि परमसौ पञ्चदिक्कालयोःस्यु
र्जीवे ते पञ्चबुद्धिप्रभृतिषडपि ते भावनाधर्म्मधर्म्माः।
ईशाने बुद्धिरिच्छाकृतिरपि कथिताः पञ्चसंख्यादयस्ते
संख्याद्याःसप्तवेगोमनसिनिगदिताःशास्त्रविद्भिःकिलाभी॥

रूपाणि षट् स्युः सितपीतरक्त-
श्यामानि नीलं हरितं तथेति।
रसाः षडेवं मधुराम्लतिक्त-
क्षाराः कषायः कटुकोऽपि तद्वत्॥
ससौरभासौरभभेदभाग्वो
गन्धोऽपि सद्भिर्द्विविधः प्रदिष्टः।
शीतस्तथोष्णः परतोऽप्यनुष्णा-
शीतो भवेत् स्पर्श इति त्रिधासौ॥
अथैकप्रभृत्या परार्द्धञ्च संख्या

प्रतिव्यक्तिभिन्ना त्विहैकत्वसंख्या ।
इतोऽन्याः समस्ता द्रव्यादीन् पदार्था-
नभिव्याप्य सन्तीति विद्वद्भिरुक्तम् ॥
परिमितिः कथिता परमाणुता-
प्रभृति चातिमहत्त्वमिहोदितोदिता ।
पृथगिति व्यवहारनिबन्धनं
प्रतिपदार्थविभिन्नपृथक्त्वकम् ॥
संयोग इष्टाऽवयवातिरिक्तद्रव्यद्वयी सम्मीलनप्रतीतेः ।
तथैव संयोगविरोधिभूतक्रियैकजन्मा कथितो विभागः ॥
परत्वं तथैवापरत्वं प्रदिष्टं
दैशिकं कालकञ्चेति भेदात् ।
भवेत् कालिकं ज्येष्ठकेऽयो कनिष्ठे
द्वितीयं विदुरस्थिते तत्सन्निधिस्थे ॥
गुरुत्वं निपातैकहेतुर्द्रवत्वं
निभिन्नोऽथ सांसिद्धिकादिप्रभिन्नम् ।
इदं स्निग्धमेतत्प्रतीतेर्निदानम्
अतः स्नेहसंज्ञो गुणः शास्त्रविद्भिः ॥
त्रिधासौ गुणः स्यात् तु संस्कारनामा
स्थितिस्थापको भावना वेगसंज्ञः ।
सुखे धर्म्म एवैष दुःखे त्वधर्म्मो
निदानं समासादद्दष्टं द्वयाख्यम् ॥

शब्दो द्विधा स्याद्ध्वनिवर्णभेदात् बुद्धिः पदार्थग्रहणे समर्था ।
सापि द्विधा स्मृत्यनुभूतिभेदात् स्मृतिस्तु संस्कारभवोपदिष्ट
प्रत्यक्षमाद्यां परतोऽनुमानोपमानशब्दा इति भेदभाजा ।
चतुर्विधा सा कथितानुभूतिः न्यूनाधिकत्वं विनिवार्य्य युक्ता ॥

स्वप्नप्रमानिश्चयसंशयाख्या
भेदाद् भ्रमो रज्जुषु सर्पबुद्धिः ।
स्थाणुः पुमान् वेति च संशयः स्यात्
तदन्यथैवान्यविधौ निरुक्तम् ॥

काम्यं सुखं दुःखमकाम्यमुक्तमिच्छा सुखे स्यात् सुख-
साधने वा ।
द्वेषस्तु दुःखे जनकेऽस्य तद्वद्भवेत् प्रयत्नो जनकक्रियायाः
भूः षड्रूपरसाऽम्बु शुक्लमधुरं भास्वेत् सिताभं सहो-
ष्णाशीतगुणा क्षितिर्मरुदथाम्भः शीतमुष्णं महः ।
कालाकाशदिगात्मनां परमहन्मानं परेषां परम्
तोयस्य द्रवता स्वभावविहिता नैमित्तिकी चान्ययोः
वेगो भूजलधामवायुमनसां पृथ्व्याः स्थितिस्थापकः ।
जीवानामिह भावना समविधः संस्कार उक्तो बुधैः
पृथ्वीवारिमहःसमीरमनसामुत्क्षेपणाद्याः क्रियाः ।
ज्ञेयाः सम्भवतो यथायथमिमा नान्यत्र तासां स्थितिः ॥
त्ता पुनर्द्रव्यगुणक्रियास्था पराख्यसामान्यतयोपदिष्टा ।
त्वभूत्वाद्यपराभिधानमथान्यसामान्यमुदाहरन्ति ॥

द्रव्येषु नित्येष्ववसानसंस्था नित्या विशेषाश्चतिभेदकाःस्युः
सम्बन्धरूपीऽवयवादिकानां नित्योऽयमेकः समवायनामा
अन्योन्याभावसंसर्गाभावभेदात् द्विधा मतः ।
अभावोऽप्यथ तत्राद्यो भेदरूपः प्रकीर्त्तितः ॥
अन्योऽप्यभावभेदोऽयं त्रिविधः परिकीर्त्तितः ।
अत्यन्ताभावकध्वंसप्रागभावविधिभेदतः ॥

अथ सृष्टिसंहारप्रक्रिया-

परावृत्त्या वृत्त्या जगति परिखिन्नांस्तनुमतः
कृपासिन्धुर्विश्रामयितुमयमीशः प्रयतते ।
ततस्तान्नेतान्निः सकलभुवनं दैवतगणैः
समेतं संहृत्य स्वयमपि लयं याति सहसा ॥
अदृष्टस्पृष्टोऽपि प्रसवितसुषुप्ताविव तदा
समस्तो जीवात्मा कलयति न दुःखं न च सुखम्॥
क्रमाज्जन्यद्रव्ये गतवति विनाशं पुनरिमाः
चिरं खे खेलन्ति प्रचलपरमाणुप्रभृतयः ॥
यावदायुर्मानं ब्रह्मणस्तावत् प्रलयमामनन्ति-
समुद्बुद्धेऽदृष्टे पुनरपि सिसृक्षामुपगतो
महेशो भूयासं सृजति भुवनानि प्रथमतः ॥
पयः पृथ्वी तेजः क्रमत इह संसृज्य तरसा
सुवर्णब्रह्माण्डं घटयति समं सर्वभुवनैः ॥
अथ हिरण्यगर्भं समुत्पाद्य प्रजासर्गे नियुङ्क्ते

ततः सोऽपि

निजात्मानं तत्तद्गुणगणपरिष्वङ्गरुचिरम्
विदित्वा नाथाज्ञाः प्रथितपरमाण्वादिघटनैः॥
प्रजाः सृष्टिं ब्रह्मा तदनु कुरुतेऽदृष्टवशतः
चतुर्वेदान् ब्रूते जगदधिपतिः सर्व्वविदसौ॥
ईश्वरेच्छानियम्येन दिक्कालसहकारिणा
स्वस्वादृष्टेन सर्व्वेऽपि फलभाजः शरीरिणः।
निष्कामधर्म्माचरणादधर्म्मद्वेषाच्चिरेण श्रवणादिजेन।
तत्त्वार्थबोधेन जनस्य मुक्तिरात्यन्तिकीदुःखनिवृत्तिरेति॥
स्रष्टा सृष्टिविधातोऽस्य भरणाद्विश्वस्य विश्वम्भरः।
संहारक्रियया हरः स सकलं कर्म्मानुरूपैः फलैः॥
आर्य्यानार्य्यसमस्तकार्य्यकरणे संप्रेषयन्नित्यशः।
सर्व्वेषां वितनोति मङ्गलधुनीतुङ्गोत्तराङ्गावलीम्॥
द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिश्च्युतो
भट्टाचार्य्यशतावधान इति यो गौडोद्भवोऽभूत् कविः।
विद्वन्मोदतरङ्गिणी ननु चिरञ्जीवेन तज्जन्मना
शास्त्रे या रचिता तुरीयपदवी तस्यास्तरङ्गो गतः॥

इति महामहोपाध्याय चिरञ्जीवभट्टाचार्य्यविरचित-
विद्वन्मोदतरङ्गिण्यां चतुर्थस्तरङ्गः समाप्तः।

---

## अथ पञ्चमस्तरङ्गः ।

अथ प्रभुणादिष्टो मीमांसकः स्वमतमाह-

देवो न कश्चिद् भुवनस्य कर्त्ता
भर्त्ता न हर्त्तापि च कश्चिदास्ते ।
कर्म्मानुरूपाणि शुभाशुभानि
प्राप्नोति सर्वें ऽपि जनः फलानि ॥
वेदस्य कर्त्ता न च कश्चिदास्ते
नित्या हि शब्दा रचनाऽस्य नित्या ।
प्रामाण्यमस्मिन् स्वत एव सिद्धम्
अनादिसिद्धेः परतः कथं तत् ॥
अकृत्तिशून्येऽत्र जगत्प्रवाहे
क्रिया भवेत् कर्म्मत एव सर्व्वा ।
कर्म्मापि पुंसां भवति क्रियातो
वीजाङ्कुरन्यायतया न दोषः ॥
यागादिकार्य्याङ्गतिभागभाजो
मन्त्रात्मका देवगणा निरुक्ताः ।
ब्रह्मादयः कार्य्यवशेन भोगं
कुर्व्वन्ति सर्व्वेऽपि चराचरस्य ॥

इत्युदीर्य्य परितोऽवलोकयति मीमांसके तार्किकः-

अ नास्तिकोऽपिश्रुतिबोधितार्थप्रमाणतामेत्यविराजमा

ईशस्य कर्त्तृत्वमनादिसिद्धमाश्चर्य्यमाश्चर्य्यमपाकरोति॥
हश्यान्यहश्यान्यपिहेतुपूर्व्वंबोध्यान्यबोध्यानि च तानितानि
ईशस्य रूपाणिनिरूपयन्सन्कर्त्तृत्वमावेदयतीहवेदः॥

मीमांसकः सभयम्-

प्रमाणमेकं विधिवाक्यमस्तु गतस्य वेदस्य वयं वदामः।
ईशस्वरूपस्य निवेदकोऽयं वेदो न मानंस यतोऽर्थवादः॥

तार्किकः सस्मितम्-

जाने भवानेव जनापवादादपेतलज्जोजगतां विजेता।
अमूलमेव स्फुटमाह वेदं यदंशतो मानमथाप्यमानम्॥

मीमांसकः-

ईशो जगत्कर्त्तरिहर्त्तरीहप्रदातरीत्यं सदसत्फला-
नाम्।
स्वच्छन्दमानन्दपरम्परायै किं धर्म्मकर्म्मादरतोनराणाम्।

तार्किकः आः व्यामोहः-

अहो ! यथाऽन्नैव महीं महेन्द्रः कर्म्मानुरूपस्य फलस्य॥
दाता।
तथा जनानां जगदीश्वरोऽपिकर्म्मानुरूपस्य फलस्यदाता
एवं जगत्कर्त्तुः श्रुतिकर्त्तृत्वमपि यद्भवानऽपाकरोति-
तदप्ययुक्तम् तथा च-

भवस्य विलयस्य च प्रतिपदं प्रतीत्युद्गमात्।
कथं भवतु नित्यता कथय तेषु शब्देष्वपि॥

मीमांसकः-

अयं स्फुरति स ध्वनिः स्फुरति सैव वर्णावलिः ।
प्रतीतिरिति नित्यतां कथयति स्मसं तत्र च ॥

तार्किकः साटोपम्-

अहो ! तदिदमौषधं पुनरभूत् स एवालयः ।
स एव शिशिरागमोऽभवदिति प्रतीतिर्यथा ॥
तथा स्फुरति स ध्वनिः स्फुरति सैव वर्णावलिः
प्रतीतिरवगाहते हतमते ! सजातीयताम् ॥
अनित्यपदमागते तदतिशब्दवृन्दे पुनः ।
श्रुतिः कृतिरपि स्थिता कथय सा किमीया भवेत् ॥
प्रमाणपदमाप्नुयात् कथमनीश्वरीयापि चेत् ।
अतः श्रुतिरियं श्रुता जगति तथ्यमैशी कृतिः ॥

यच्चोक्तमनन्तःशून्योऽयं जगत्प्रवाह इति तदप्ययुक्तम्, महाप्रलयस्यैव जगत्प्रवाहस्यान्तत्वात् ।

मीमांसकः-

अहो ! महाप्रलयोत्तरमपि सृष्टिर्जायते एव, इति सोऽपि तदन्तः ।

तार्किकः

स कीदृशो महाप्रलयो यदनन्तरं सृष्टिसम्भावना?

तथा हि त्रिविधः प्रलयः-

दैनन्दिनप्रलयः खण्डप्रलयःमहाप्रलयश्चेति । त

ब्रह्मणो रात्रौ पृथिव्याद्यधोलोकानां जलप्लावनेन दैनन्दिनप्रलयः। ब्रह्मणोऽपवर्गे सति जन्यद्रव्यानधिकरणकालः खण्डप्रलयः, एतदुत्तरञ्च पुनः सृष्टिरस्त्येव। क्रमात् सर्व्वेषु जीवेषु मुक्तेषु भोक्तुरभावात् जन्यभावानधिकरणं कालो महाप्रलयाख्यो भविष्यतीति, तदनन्तरञ्च न कदाचिदपि पुनः सृष्टिरिति स एव जगत्प्रवाहस्यान्तः।

मीमांसकः-

किमीदृशे महाप्रलये मानम् ?

तार्किकः-

विमुक्ता भोक्तारः पुनरपि न संसारविषये
न वा जीवात्मानो नवनवतयोत्पद्य च परे।
क्रमादेवं प्राप्ते तदखिलजने मोक्षपदवीम्
अभावाद् भोक्तॄणां कथमपि भवानेव भविता॥

यच्चोक्तम्, मन्त्रात्मका एव देवाः यागाद्याहुतिभागभाजः। न त्वाकृतिविशेषशालिनः। तदप्ययुक्तम्, सम्भवतिश्रुतिस्मृतिपुराणादिप्रामाण्ये।

मीमांसकः-

'ब्रह्मणे स्वाहा, इत्यादिमन्त्रेण दीयमानाहुतिं यदि ब्रह्मैवाधिगच्छेत् तर्हि यजमाने ब्रह्मणि तादृशाहुतिं कः प्राप्नोति ?

ब्रह्मा स्वयमेव। यथा स्वदत्तप्राणाहुतिं स्वयमेवोपभुङ्क्ते ततस्तृप्यति च। तथैव होमीयविविधवशाद् ब्रह्मणा स्वोद्देशेन दत्ताप्याहुतिः स्वाग्निद्वारा फलजनिकेति न काप्यनुपपत्तिः। अतो भवान् मन्त्रैराराध्यदेवमपाकुर्वं स्वद्बोधकनिगमप्रामाण्यखण्डनेन चार्व्वाकतामङ्गीकरोति।

इत्याकर्ण्य वेपमानाधरे मीमांसके वेदान्ती-

किमहो! मिथ्याभूते जगति यागाद्याहुतिकोलाहलैः?

तार्किकः साटोपम्-

वयं खलु युक्तिशरवर्षिणो निराकृताखिलप्रतिपक्षिणः
तदिमां जगतीमभितश्च मां मयि जीवति कः कुरुतामभूताम्।
विपिनान्यधितिष्ठति केशरिणि द्विरदः कुरुते न तदाकुलताम्॥

वेदान्ती सस्मितं सत्यं सत्यम्-

मिथ्या प्रपञ्चानपदार्थसार्थनादाय तद्युक्तिशरान् किरद्भ्यः।
ब्रह्मास्त्रमेकं शरणीकृतस्य कथं ममस्यादपिभीर्भवद्भ्यः

तार्किकः-

कीदृशं तद्ब्रह्म भवताम्? यत् शरणीकरोति भवा

वेदान्तो-

शरीरी यस्मान्तःकरणगतभागः समभवद्
विधीशौ यन्मायाप्रतिफलितभागौ हरिरपि।
यदालम्ब्य स्वङ्गां वहति जगती तथ्यसदृशीं
निराकारं धाम स्फुरति परितो ब्रह्म तदिदम्॥

अपि च-

कामक्रोधभुजान्तरालपतितं लोभोग्रदंष्ट्रात्रुटत्-
सर्व्वाङ्गीनबलं विकाशितखलद्वारामोहजिह्वागतम्।
माया नाम निशाचरी जगदिदं ग्रासीकरोति च्चणात्
को मुच्येत ततो जगत्यविदितब्रह्मैकरच्चो जनः॥

तदेव ब्रह्म सर्वेषां स्वरूपम् परन्तु-

दृश्यते न खलु वाससावृतं कण्ठगं कनकभूषणं यथा।
तद्वदेवमनसावृतं न हि स्वस्वरूपमवगम्यते जनैः॥

भूरिशः शमदमादिसाधनैश्चित्त एव विलयं गतेसति।
मेघमुक्त एव शीतदीधितिर्विश्वगामिनिजधामवीच्च्यते।
मादृगुक्तवचसान्तु का कथा सर्व्वयोगिमनसामगोचरम्।
ज्ञानसौख्यमयमेकमङ्गतं सर्वं जयति धाम तत् सदा॥

स्वप्ने यथा वीचितदेहगेहाज्ज्याते प्रबोधे विलयं प्रयन्ति
स्वप्नावृतं विश्वमदस्तथैव दृष्टे स्वरूपे विलयं प्रयाति॥

ब्रह्मण्येव समुत्पद्य जगत्तत्रैव लीयते।
बुद्बुदा इव तोयेषु शुक्तयो रजतेष्विव॥

वेदान्ती-

श्रुतिरेव ब्रह्मणोऽद्वितीयत्वं प्रतिपादयन्ती जगतो मिथ्यात्वम् प्रतिपादयति ।

तार्किकः-

आ व्यामोहः । तस्याद्वितीयत्वन्तु ऐश्वर्यकर्तृत्वादिकमादाय, क्वचिन्मिथ्यात्वकथनमपि नश्वरत्वादिकमादय ।

तथा हि-

एकोनरेन्द्रः क्षितिपालकोऽयमेको वने रक्षतिगाश्चगोपः
एकोबुधोऽध्यापयतीति तद्वादीशोऽयमप्येकइतिप्रसिद्धः।

किञ्च, य एव वेदो ब्रह्म निरूपयति स एव संसार धर्माधर्मौ स्वर्गनरकादिकं बन्धमोक्षौ तदुपायं देवाराधनादिकञ्च कथयति, तत् कथं सम्भवति वास्तवसंसारस्य मिथ्यात्वेन हि वेदो मिथ्या भूताय मिथ्याभूतं प्रेरयति ।

वेदान्ती सकोपम्-

के देवाः के च वेदास्तदुदितमपि किं को विधिः कोनिषेधः
कः कर्त्ताकिञ्चपापंसुकृतमपितयोः किंफलं कोऽस्यभोक्ता
को जातः कोविनष्टः स्तुजतिकिमिह कः कः पिताकैवमाता
को बद्धः कोविमुक्तः सकलमपि परं चिद्घनब्रह्मरूपम् ॥

तार्किकः सहासम्-

एवं सति त्वमपि कः ? किं ब्रवीषि ? किंवा तत्ब्रह्म?
सकलमपि मिथ्यैव मिथ्यावादिनस्ते।

इति सर्व्वे हसन्ति स्म ।

अथ तार्किकः ऊर्द्ध्वमवलोकयन्-

ये त्वां दूरमपास्य कर्म्मणा इह प्राधान्यमाचक्षते
येऽपि त्वां कथयन्ति निर्गुणतया निन्दन्ति कर्म्माण्यपि।
नाथ ! त्वच्चरणारविन्दयुगलध्यानात्प्रभावान्मया।
नीता मूकपदं वका इव सभामध्यासते ते किल॥
द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिस्सुतो
भट्टाचार्य्यशतावधान इति यो गौडोद्भवोऽभूत् कविः।
विद्वन्मोदतरङ्गिणी ननु चिरञ्जीवेन तज्जन्मना
शास्त्रे या रचितेह पञ्चमपदं तस्यास्तरङ्गो गतः

इति श्रीमन्महामहोपाध्याय-श्रीचिरञ्जीवभट्टाचार्य्य-विरचित-
विद्वन्मोदतरङ्गिण्यां पञ्चमस्तरङ्गः समाप्तः।

---

## अथषष्ठस्तरङ्गः॥

अथ प्रभुणादिष्टः सांख्यवित् स्वमतमाह-

आद्यातु मूलप्रकृतिःप्रदिष्टासप्तापरेस्युर्महदादयोऽपि।
विकारभूताःकिल षोडशान्ये तत्त्वंचतुर्विंशतिसङ्ख्यमि-
त्थम् ॥
योनिपत्रे जलविन्दुनेव जिर्लेप्ररूपेण विलासहेतीः।

प्रक्रीड़तैव पुरुषेण सार्द्धं तत्वानि पञ्चाधिकविंशतिश्च॥
मूलत्वमेवाखिलकारणत्वादव्यक्तितानेन्द्रियगोचरत्वात्
अनादिकारणमन्तरेणनिवेदितास्याः प्रकृतेःस्वरूपात्॥
उदीरिताःसत्वरजस्तमांसि तत्साम्यरूपप्रकृतेरवस्थाः।
भोगस्य भेदात् पुरुषस्यभेदस्तद्भेदतो हि प्रकृतेर्विभेद॥
महानहङ्कार इमावुभौ च तन्मात्रसङ्ख्याअपि पञ्चचान्ये
इत्येवमेतैरिह सप्तसंख्यैर्गणोऽयमुक्तो महदादिनामा
तन्मात्रसंज्ञा अपितत्तशब्दःस्पर्शश्च रूपञ्च रसश्च गन्धः।
शब्दोऽयमित्यादिकसर्व्वलोकसाधारणेकव्यवहारसिद्धः॥
जनकजस्यतयात्रिनिवेदितंबुधजनैर्महदादिगणस्य तु।
प्रकृतिपूर्व्वकमेव सनातनंविकृतिनामयथार्थतयास्थितम्

नभोवायुतेजोजलानि क्षितिश्चे-
त्यमी पञ्च संख्या महाभूतसंज्ञाः।
तथैकादशैवेन्द्रियाणीति भेदाद्
विकाराभिधाः षोड़शामी निरुक्ताः॥

श्रोत्रंत्वचक्षुरथो रसज्ञाघ्राणन्त्विति ज्ञानकरेन्द्रियाणि
वाक्पाणिपादाःस्युरुपस्थपायू कर्मेन्द्रियाणीतिमनोद्वि-
भावम्॥

ज्ञानाश्रयत्वात् सुखदुःखभाजो निर्लेपतेत्थं पुरुषस्यबोध्या
यत्कर्तृतानास्तिसमस्तमेव पश्यत्यसौसाक्षितयाऽन्तराद
एतादृशेनैव समेत्य योगं पुंसा प्रसूते प्रकृतिर्महान्त

अथाभिधास्येऽध्यवसायरूपबुद्ध्यन्यनाम्नो महतोऽष्टभेदान्
धर्माभिधं ज्ञानसमाह्वयञ्च वैराग्यमैश्वर्य्यमतो विरोधाः ।
धर्म्मादिकानां पुरतश्चतुर्णां सत्त्वांशतो भूतिरुदीरितैषा

तत्तद्विरोधैकगुणामधर्म्मा-
दीनां चतुर्णां तमसः सकाशात् ।
सत्त्वात् सुखं स्यात् रजसोऽतिदुःख-
माच्छादकत्वात् तमसो विमोहः ॥

अहंसुखीत्याद्यभिमानरूपोऽहंकार उत्पद्यत एव बुद्धेः
अहंकृतेरप्युपयान्ति जन्म तन्मात्रसंज्ञान्यथ चेन्द्रियाणि ॥
तन्मात्रतोऽपि प्रभवेत् क्रमेण तत्तद्गुणाधिष्ठितभूतभूतिः
शब्दाश्रयाकाशसमाह्वयस्स्याच्छब्दतन्मात्रत एव जन्म ॥
शब्दादियुग्माश्रयमारुतस्य शब्दादितन्मात्रयुगात्प्रसूतिः
धाम्नस्तु शब्दप्रकृतित्रिभाजस्तन्मात्रतः शब्दमुखात्त्रयात्
स्यात् ।
जलस्य शब्दादिचतुष्कभाजस्तन्मात्रितः शब्दमुखाच्चतुष्कात्
शब्दादिपञ्चाश्रयभूतभूमेः शब्दादितन्मात्रकपञ्चकात्-
स्यात् ॥
एवं महाभूतगणैर्मिलित्वा शरीरमुत्पद्यत एव जन्तोः ।
…द्भूतजांशोऽधिकतामुपैति तद्भौतिकं देहमुदाहरन्ति
…रीरसंसर्गवशेन चैवं समस्तकार्य्यं प्रकृतिः करोति ।
…क्तिभोगं पुरुषस्तु विज्ञः पङ्ग्वन्धवत् स्यादुभयोपयोगः

प्रत्यक्षमनुमानञ्च शाब्दबोध इति त्रिधा।
प्रमाणमनुमानैकगम्योऽत्र पुरुषो मतः॥

दुःखाय नित्यं प्रकृतेस्तु योगादज्ञानतः स्यात्पुरुषस्य बन्धः
संसारिणो दुःखमयं त्वसेत्य सर्वं सुखं दुःखतयोपदिष्टम्॥
यागादिकार्य्येष्वपि या तु हिंसा स्वर्गोत्तरं सा नरकस्य-
कर्त्री।
तथा तथा वेदविबोधितत्वात् कश्चिद्द्वयादेव फलद्वयस्य॥
इत्थं विदित्वा सकलार्थसार्थं नाहं न मे किञ्चन मे न सौख्यम्।
पुनः पुनश्चिन्तयतः किलेति ज्ञानोदयः स्यात् पुरुषस्य-
कोऽपि
पश्यत्यसौ प्रेक्षकवत् पुरस्तात् अपेतदोषः प्रकृतिं स्वकी
याम्।
जानाति चेयं मम दुःखहेतुर्बन्धस्य कर्त्रीति विनाशनीया
सा वीक्षमाणा प्रकृतिस्तु पुंसां विनाशमायात्यतिलज्जितेव
तथा विमुक्तः पुरुषोऽपि मुक्तिमायाति दुःखत्रितयेन हीनः

इत्युदीर्य्य तूष्णीं भूतं सांख्यविदं प्रति

तार्किकः

यदुक्तमेतद्भवतावता द्या या वैधहिंसा क्रतुषु प्रवृत्ता।
स्वर्गावसाने नरकस्य कर्त्री सापीति तद्युक्तमदो मन्ये॥ या
यतः बलवदनिष्टसाधनं न तदिष्टं पुरुषप्रवर्त्तकम्। तद
यं इदं मनुते न मानवो मधुसंयुक्तविषं स भक्षयेत्। क्त

अतो न वैधहिंसा पापजनिकेति। तथा सति नरकभीरूणामभिज्ञानां महर्षीणामपि यागादौ प्रवृत्तिर्न स्यात् न हि वेदेश्वरो नरकमार्गं दर्शयति।

सांख्यवित् सस्मितम्

एतत् सिद्धान्तितं यस्मात् तस्माद्‌ जाने भवादृशैः।
प्रामाण्यं निष्यते प्रायो वेदे हिंसानिषेधके॥

तार्किकः

सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्।
इति न्यायेन सर्वत्र शास्त्रस्यार्थः प्रवर्त्तते॥

तथा च वैधेतरहिंसैवाधर्मजनिकेति तादृशश्रुतितात्पर्य्यं:।

अथ मीमांसकः सहर्षम्

साधु साधु भवतेह भाष्यते सम्यगर्थमवगच्छसि ध्रुवम्।
इत्यमेव जगदे महामुनिर्वेदतत्त्वमधिगत्य जैमिनिः॥

अथ तार्किको मीमांसकमुद्दिश्य

एवं यदेव प्रकृतेर्जडायाः कर्तृत्वं पुरुषस्य ज्ञातृत्वं भोक्तृत्वञ्चाह तदप्ययुक्तम्। कर्त्ताहं जानामि भोक्ताहं जानामिकर्तृत्वभोक्तृत्वज्ञातृत्वादीनां सामानाधिकरण्यप्रतीतेः, अतो ज्ञाता भोक्ता च पुरुष एव कर्त्ता इति सिद्धम्।

अथ सङ्क्षोभे साङ्ख्यादिदृ प्रभुं प्रति-
उत्पन्नं क्रिययेत्यपूर्व्वमिति यद्गायन्ति मीमांसकाः
दुर्लक्ष्यं भ्रमयत्यदो जगददो मायेति वेदान्तिनः ।
सर्वेषामपि मूलकारणतया सांख्याः प्रकृत्याह्वयं
तत्त्वे दृष्टिमवारितां सुखमयीं धारामपारां दिशेत् ॥
द्वैताद्वैतमतादिनिर्णयविधिप्रोद्भुद्धबुद्धिस्सुतो
भट्टाचार्य्यशतावधान इति यो गौडोद्भवोऽभूत् कविः॥
विद्वन्मोदतरङ्गिणी ननु चिरञ्जीवेन तज्जन्मना
शास्त्रे या रचितेह षष्ठपदवी तस्यास्तरङ्गो गतः ॥

इति महामहोपाध्याय चिरञ्जीवभट्टाचार्य्यविरचित-
विद्वन्मोदतरङ्गिण्यां षष्ठस्तरङ्गः समाप्तः ।

---

## अथसप्तमस्तरङ्गः ॥

अथ प्रभुणादिष्टः पातञ्जलवित् स्वमतमाह-
योगएषकथितो विमुक्तिदश्चित्तवृत्तिविनिरोधनं हियत्॥
तच्च वाह्यविषयान्निवर्त्तनाच्चेतसोऽन्तरभिगमनं मतम्॥

तत्र चित्तस्य पञ्चविधावस्था क्षिप्तमूढ़विक्षिप्तैकाग्र निरुद्धभेदात् ॥ तत्र क्षिप्तमुद्रिक्तेन रजोगुणेन सुख-दुःखसाधनविषयेषु प्रेरितम् तच्च सदैव दैत्यादीनां तत्प्रकृतिकानाञ्च मानुषादीनाम् ।

तेषामेताः क्रियाः

दम्भाश्रयादुग्रतरं शरीरं क्लेशावहं चैहिकभोगहेतोः।
रोषोऽभिलाषाभिमदाभिभूताः परोपतापाय तपश्चरन्ति
अवाप्य ते सम्पदमुग्रभावाः प्रचण्डदण्डैर्व्यथयन्ति लोकान्
निन्दन्ति नित्यं द्विजदेवधर्म्माननीश्वरं सर्व्वमिदं वदन्तः
सम्पन्नमेवं समभूत् परापि सम्पत्तिरस्मैरधिका भवित्री।
हता मयैते रिपवः परेऽपि बलान्नियम्या विविधैरुपायैः
इत्यादिभिर्दूरतरप्रवृत्ते-
र्मनोरथानां शतकैरनेकैः
क्लिश्यन्ति सम्पत्स्वपि शान्तिहीना
दुष्पूरकामाः परितो भ्रमन्ति ॥
दुरात्मनामात्मनिमानभाजां यथायथा सम्पदुपैति दृद्धिम्
तथातथा मोहमदप्रवृद्धैः परोपमर्द्दाय मनःप्रवृत्तिः ॥
विदाहिरूक्षाम्लकटूष्णतीक्ष्णक्षाराशनादुष्टजनाश्रयाश्च।
क्लिश्नाशुरम्यैः परिणामदुष्टैर्भोगैः सुखाख्याविमयेन्द्रियोत्थैः

मूढ़स्मुद्रिक्तेन तमोगुणेन क्रोधादिप्राचुर्य्यान्निरव धिपरोपतापादिरूपविरुद्धकृत्येषु दुःखसाधनविषयेषु च निरतम्। तच्च सदैव कृत्याकृत्यमगणयतां रक्षःपिशाचादीनां तत्प्रकृतिकानाञ्च महिमादीनाम्।

तेषामेताः क्रियाः

उल्लङ्घ्य शास्त्रीयविधिं तमःस्था निपीड़यन्तः स्वशरीरमात्रम्।
क्रोधेन हिंसैकपराः कदाचित् तपश्चरन्तोऽवमनीश्वरज्ञाः॥
मलीमसाश्चाशुचयो दृशंसाः सदानृतं भाषणमाचरन्तः
शापादिभिः कोपकषायभावास्तपःफलानि क्षपयन्ति ते हि॥
आशुप्रवृद्धां दूतमेव नाशवतीमतिक्षोभकरीं परेषाम्।
माद्यन्ति ते सम्पदमुग्रभावास्तपःप्रभावेण तथापि लब्ध्वा
अधर्म्मतः सम्पदुपैति वृद्धिमधर्म्मत सर्व्वजनो बिभेति।
अधर्म्मतः सर्व्वसुखानि चक्षुरधर्म्मतः कः पुरुषार्थ आस्ते॥
त एवमित्यादिकया कुबुद्ध्यानिरर्गलं पापविधौ प्रवृत्ताः
स्त्रीप्राणवित्तादिहृतिं परेषामिच्छन्ति दुर्व्वारतरेन्द्रियार्थः
अधर्म्मके धर्म्मधिया प्रवृत्ताधर्म्मादधर्म्मैकधियानिवृत्ताः
साधूनसाधून् कथयन्ति मूढबुद्धेरसाधूनपि साधुवृत्तान्॥
अमेध्यकोच्छिष्टविगन्धिदग्धं विस्वादवत्पर्युषिताशनाश्च
सदाकुचेला मलिनस्वभावा मालिन्यवद्वस्तुनि निघृणाश्च॥
ते चेन्द्रियार्थेष्वतिलोलुपत्वा
दजातलज्जा विषयेष्वतृप्ताः।
भ्रमन्ति हा हन्त क्षतान्धकल्पा
श्चिन्ताभिरन्तः परिशुष्यमाणाः॥
विच्छिन्नमुद्रिक्तेन, सत्वगुणेन शान्तिप्राचुर्य्यात्
क्लेशसाधनविरतिपूर्व्वकमानन्दसाधनेषु शब्दस्पर्शरूप

रसगन्धादिविषयेष्वेव निरतम्। तच्च सदैव देवानां तत्प्रकृतिकानाञ्च मानुषादीनाम्।

तेषामेताः क्रियाः ४

सत्वाश्रिता भक्तिविशेषभाजः श्रद्धावशादीश्वरमर्च्चयन्तः चरन्ति तेषां विधानपूर्व्वं तपांसि दत्त्वादिभिरुज्झितानि धर्म्मेषु वेदेषु कृतानुरागा विप्रेष्वथो गोषु च बद्धभावाः।
दयालवो दीनजनेषु नित्यं चरन्ति पुण्यानि विधानपूर्व्वम् यथा यथा सम्पदुपैति वृद्धिं तथा तथा तेऽधिकशीलवन्तः।
सर्वोपकाराय मतिः प्रवृत्ता दानाय भोगाय धनानि तेषाम्॥
बन्धूननाथानपि पालयन्तः सदैव वृद्धानभिवादयन्तः।
भक्तोर्गुरूणामपि पालयन्तो जगन्ति कीर्त्त्या परिपूरयन्ति
दुष्प्रापभोगार्थमचिन्तयन्तः परोदयं नूनमविद्विषन्तः।
यथोपपन्नैर्विषयैः स्वकीयैः सन्तोषमन्तर्नियतं भजन्ति॥
सतो भवेत् सम्पदि न प्रमादो न वा विकारो विपदुद्गमेऽपि
आकोपितोऽप्येषजनैर्जघन्यैर्न वा भवेद्दारुणकर्म्मकारी॥
लज्जावशादेषसदाभिभूताः कामादयस्ते फलशालिनो न
सुशीलता सर्व्वजनानुरागात् कुतोऽस्य मात्सर्य्यमदौ भवे-
-ताम्॥
सदोज्ज्वलास्निग्धरसालमिष्टपथ्याशनाः साधुजनाश्रयाश्च
[illegible]हीना न कदापि दीनाः सुखेन कालं गमयन्ति सन्तः
अत्र गुणत्रयभाजामपि सांसारिकाणां तत्तद्गु-

णोत्कर्षे तत्तद्गुणित्वेन व्यवहार इति बोध्यम् । इत्येवमेतास्तिस्रोऽवस्था न योगोपयोगिन्यः । अत्रैव यत्तमसोरत्यन्तापकर्षकाच्छुद्धसत्वमात्रोत्कर्षेण चित्तस्य वहिर्वृत्तिलाभादेकाग्रावस्था । ससंस्काराणां सर्व्वासां वृत्तीनां प्रलये सति चित्तस्य निरुद्धावस्था भवतीति। इमेऽवस्थे यौगिके वैराग्याभ्यासाभ्यां निष्पाद्येते । तथा हि-

नित्यमप्यथ निमित्तसम्भवं कर्म्मकल्मषविनाशनं च यत्
तत्कृतोनिखिलकामनाशुचः काम्यकर्मसुकृतेष्वपि क्वचित्॥
कुर्व्वतो विषयदोषभावनां सर्व्वभोगविरतस्य देहिनः।
सर्व्वबाह्यविषयादनार्य्यतश्चित्तवृत्तिरभितो निवर्त्तते ॥

तदेवं वैराग्यजनकं विषयदोषदर्शनम्, अत केचन विषयदोषाः प्रदर्श्यन्ते । तथा हि-

शीतवाततृडुदातपादिभिः क्लेश एवपरितो विजृम्भितः
दृश्यते प्रकट एव देहिनामत्र कीटपशुपक्षिशाखिनाम्
भूतले सकलदेहिदुर्लभं मानवीयमपि जन्म चेद्भवेत् ।
सावधानमनसानुभूयतां तद्विनाशरचना विधीयते ॥
तत्र मानवजने दरिद्रता चेद्भवेत् किमपि नैव रोचते
किं करोमि परितः क्व यामि वा किं भविष्यति ममेति चिन्तया
दारतत्तनयतोऽन्यलोकतोऽमिद्ध नःपुरुष एव गर्हणम्
पापकर्म्मनिरतो धनार्जनेनिन्दति स्वजनमेव केवलं

चेद्धनं भवति तर्हि सञ्चये रक्षणेऽधिकतया विवर्द्धने ।
तत्र तत्र विषये निरन्तरं क्लेशमेति यतमानमानसः ॥
बर्द्धनं समधिगत्य मादृतो जायते नरककारणक्रिया ।
सन्मतिः सुकृत एव जायते जायते तदपि बोधनं मङ्गल्
चेद्विवाहघटना न जायते हा ! कदा मम वधूर्भविष्यति
हा ! रण्डस्यपदवीगतैव मे चिन्तयेति सततं विषीदति
चेद्विवाहघटनापि जायते तत्र सा यदि विरूपशालिनी
तर्हि जन्म विफलं वदत्यसौ सुन्दरी यदि तदाभयान्तरम्
किन्तु शीलसहिता भविष्यति किन्तु दुष्टचरिताद्पैष्यति
किन्तु मनोऽनुरूपतां चिन्तयेति सुगमेति नो जनः
अजातपुत्रस्य दुरन्तचिन्तासन्तापसन्तापितचित्तवृत्तेः ।
क्लेशा भवेयुर्विविधप्रकाराः सुखायदारानष्टज्ञानभ्रत्याः

आब्रह्मणो वंशपरम्परेयं
मदेकविश्रान्ततया निरस्ता ।
मां बन्ध्यमासाद्य कुलेऽद्य हा हा
लुप्तोदपिण्डाः पितरो मदीया ॥

इत्यादिचिन्ताशतकैरनेकैः चित्तं न शान्तिं कथमप्युपैति
ब्रवीमि किं जातमृतात्मजस्य दुःखातिरेकं मनसामगम्यम्
जातेऽपि पुत्रे समवाप्तसौख्यश्चिन्तामचिन्त्यां नियतं तनोति
स्वरो वा कुलपांसुलो वा कीदृक्प्रभावो भवितेष जातः
कदाचित् कुलपांसुलः स्यात् लोकद्वयीतस्य कुलस्य नष्ट

वदामि किं दूषणमन्यदत्र सर्व्वे हि पश्यन्ति पदे पदे यत् ॥
चेत् कदाचित् गुणभाग्यशाली तथापि दुःखाय भवन्त्यनेक
यत्साधुकर्म्माण्यपि मत्सरत्वान्निन्दन्ति निन्दैकपदेऽभि-
षिच्य ।
जातं पदं स्थास्यति वा न वेति भ्रष्टः पदज्जीवति चेत्तथैव ।--
इत्यादिचिन्ताशतकैरनेकैर्विवेचकैरप्यनुभूयमानैः ॥
अवाप्तविद्याससवाप्तभोगा
लब्धप्रतिष्ठा अपि राज्यभाजः ।
सन्तोषमन्तः क भवन्ति हन्त !
निरन्तरं क्लेशमयोऽनयः स्यात् ॥
स्वर्गस्थितस्यापि निपातशङ्का
पङ्कान्तराले पततो न शान्तिः
क्षीणे स्वपुण्ये सति मर्त्यलोक-
मुपेत्य कर्म्माणि पुनः करोति ॥
अद्यश्च तेश्वः सुखमाविधास्ये भवामि यत्नैकपरस्तदर्थम् ।
इत्येवमाशाशतकैरनेकैर्भ्रमन्ति वातैरिव नीयमान
हा ! जन्तवो ब्रह्मपदान्तमन्त-
र्न शान्तिमायान्त्यतितृष्णयैव ।
परन्त्वमी योनिषु तासु तासु
क्लिश्यन्ति हा ! हन्त । परिभ्रमन्तः ॥
इत्थं विवेचनपरो यतते परात्मा ।

संसारबन्धननिबन्धनखेदमुक्त्यै ।
तत्राप्युपायमनपायमथाविधास्ये
दास्ये मतिर्भवति यत्र सदाशिवस्य॥

तत्राभ्यासो नाम योगौपयिकानां पुनः पुनरनुष्ठानम्।
तदुपायाः श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञाः । श्रद्धा तु योगविषये
चेतसः प्रसादः। वीर्य्यमुत्साहः । स्मृतिरनुभूतानामसंप्रमोषः ।
समाधिरेकाग्रता । प्रज्ञा ज्ञातव्यस्यात्मस्वरूपस्य प्रविवेकः।
अत्रापि श्रद्धादयश्चोत्तरमुपयोगं भवन्तो योगौपयिका भवन्तिइति ज्ञेयम् । तथा हि-चेतःप्रसादात् उत्साहः, ततश्च पूर्व्वं पूर्व्वमनुतानां चास्य प्रमोषः, ततश्चैकाग्रता, ततो ज्ञातव्यप्रविवेक इति । अथ योगस्यापराण्यङ्गानि,यथा-यम-नियमासन-प्राणायाम-प्रत्याहार-ध्यान-धारणा-समाधय इति ।

स्तेयकर्म्मविरतिदयार्जव क्षान्तिशौचव्रतयोमिताशनम्।
सत्यभाषणमजीवहिंसनं ब्रह्मचर्य्यमिति ते यमा दश॥
आस्तिक्यसन्तोषतपःसुरार्चादानानि लज्जासुमतिश्च होमः
सिद्धान्तितानां श्रवणं जपश्च योगाङ्गभूता नियमाद्श ते॥
पद्मासनस्वस्तिकभद्रवज्रवीरासनानीति च पञ्च भेदाः।
प्रायाहि योगोपहितासनानां तथा परे पञ्चशतंप्रभेदाः

शरीरसञ्चारिमरुत्प्रचारसाहित्यराहित्यविधिं विधातुम्
स्यात्पूरकं कुम्भकरेचकाख्यं यत्कर्म्म तच्छर्म्मकरं तुरीयम्

इन्द्रियाणां बलवतां विषयेषु विहारिणाम् ।
तेभ्यो निवर्त्तनं यत्तत् प्रत्याहारतयोदितम् ॥

अङ्गु ब्रह्मरन्ध्रान्तं तेषु तेषु स्थलेषु यत् ।
धारणं प्राणवातस्य धारणेयमुदाहृता ॥

ध्यानन्तु योगक्रमदो निरुक्तं यथोक्तरूपो हृदयारविन्दे
यथोक्तरूपस्य शिवस्य शक्तेर्यथोक्तरूपेण विभावणं यत् ॥

निरुद्धवायूनवरुद्धचेन्द्रियं
यदेकता भावनमात्मनाशनम् ।
शिवस्य शक्तेरविभक्तरूपतः
समाधिरेषोऽभिहितो हि योगिभिः ॥

कामश्च कोपश्च तथैव लोभो
मोहो मदो मत्सरता षडेवम् ।
विघ्ना विनिघ्नन्ति हि योगमार्गं
ते घ्नन्ति चेत्तानि न तैरुपायैः ॥

इत्येवमेभिरभ्यस्तैर्यमादिभिरुपायैरेताः सिद्ध-येऽपि भवन्ति, तथा हि-अहिंसाभ्यासेनास्य सन्निधौ सहजविरोधिनोऽपि अहिनकुलादयः परस्परविरोधं परिहरन्तो वसन्ति । सत्याभ्यासेन क्रियाणां द्रुततरमुचितफलप्राप्तिः । अस्तेयाभ्यासेन स्वत एवाखिल

रत्नान्युपतिष्ठन्ति। ब्रह्मचर्य्याभ्यासेन वीर्य्यप्राचुर्य्यम्। अपरिग्रहेण जन्मान्तराणां स्मरणम्, अनेन च स्मरणेन सकलयोन्यनुभूतविषयोद्बोधे सति समस्तजन्तूनां भावेङ्गितादिपरिग्रहः। शौचेन सत्त्वशुद्ध्यादिः; अथ अमेध्यवस्तुषु जुगुप्सोदयात् स्वाङ्गेष्वप्युपनिबन्धकभावनातो जुगुप्सा, ततः सुतरामन्यकायेषु जुगुप्सोदयादसंसर्गः। सन्तोषेण नितरां सुखलाभः। तपसा च कायेन्द्रियशुद्धिः, अत्र कायशुद्धितः कायस्य महत्त्वाणुत्वव्यूहत्वादिरचनसामर्थ्यम्, इन्द्रियशुद्धितश्च सूक्ष्मतमविप्रकृष्टतमशब्दश्रवणं खेचरादिकथाश्रवणञ्च सूक्ष्माव्यवहितविप्रकृष्टतमवस्तूनां दर्शनं तथैव घ्राणगन्धादीनामपि ग्रहणम्; परपुरुषप्रवेशादिशक्तिश्च। जपलक्षणेन च स्वाध्यायेनेष्टदेवतादर्शनादि, ततश्चान्तरायीभूतक्लेशोन्मूलनकृतः समाधि लाभः। आसनेनाङ्गशैथिल्याद्यभावः शीतोष्णक्षुत्पिपासाद्यनभिभवश्च।

पाताले सलिले गिरौ भुवि वियत्यव्याहता स्याद्गतिः
शापानुग्रहशक्तिरप्रतिहता सार्व्वज्ञ्यमाज्ञोदयः।
दृष्टार्थानवबोधनं भयहतिस्त्वोर्निजाधीनता
प्राणायामविधानसाधनवशादन्तर्द्धिसिद्ध्यादयः॥

चित्तस्याधिकसाधितस्य तु वहिर्वृत्तेर्निरोधः क्रमाद्

अन्तर्वृत्तितयान्तरिन्दुविगलत् पीयूषमास्वादयेत्।
स्वात्मन्येव सदाशिवमयं तज्ज्योतिरालोकयेत्
सान्द्रानन्दपरम्परामनुभवेत् सिद्धिः समाधेरियम्॥

योगाभ्यासिभिरपि मृदुमध्यतीव्रैः संवेगैश्चिरमध्याचिरकालेन भवति, संवेगस्तु क्रियाहेतुर्दृढतरसंस्कारः।

अथ योगिनां साधनसाधनादिसिद्धान्तक्रियाभेदाः केचन प्रदर्श्यन्ते।

मन्दं मन्दं विजितशयनक्षुत् पिपासा भवन्तः
किञ्चित्किञ्चिद्विषयविरतिं चेतसः कल्पयन्तः।
वारं वारं शिथिलशिथिलं धारयन्तः समीरम्
भूयोभूयोविगलितभियो निर्जनेषु भ्रमन्ति॥

चित्तस्यादौ तरलरतताराधनं साधनेन
स्पष्टीकृत्य प्रकृतिसुभगे वस्तुनि क्वापि रम्ये।
मन्दं मन्दं तदनुधमनाचक्रमावेशितस्य
स्थैर्याद्योगं विदधततरां भ्रान्तवृत्तेर्निवृत्तिः॥

संसारेऽस्मिन् क्वचिदपि गिरौ बद्धपद्मासनस्थाः
स्वाङ्के पङ्केरुहमिव समुत्तानपाणी विधाय।
ईषन्मीलन्नयनविगलत् प्रेमजाश्रुप्रवाहाः
स्वैरं स्वैरं कमपि सुरसं स्वान्तरास्वादयन्ति॥

बाह्यं साक्षात् करणकरणं सर्वतः सन्निमील्य

ज्योतिर्ज्वालस्फुरितधमनीमध्यमावेश्य चेतः।
क्लेशातीतं कमपि परमानन्दमन्तर्भजन्तो
धन्यां धन्यां विदधति चिरं योगिनो योगनिद्राम् ॥

अन्तर्ज्योते विमलसलिले पुष्करे वा प्रयागे
स्नात्वाचम्य क्षयितकलुषास्तत्र सन्ध्यामुपास्य ।
सन्तर्प्येन्दोर्गलितसुधया पञ्चभिश्चोपचारैः
केऽपि ज्योतिः समुदयमयीं देवतामर्चयन्ति॥

चक्रे चक्रे समवतया स्वेच्छया सञ्चरन्तः
वारे वारे नलिनविवरे श्वासमापूरयन्तः ।
काले काले स्वयमुपगतं मण्डलीतः सुधांशोः
स्वादं स्वादं निभृतममृतं योगिनोऽन्तः पिबन्ति॥

ज्योति पूर्णं सकलभवनव्योमचक्रान्तरालम्
आत्मारामं कमपि विषयीकृत्य कृत्यान्यतीताः ।
जीवन्मुक्ताः समुदितचिदानन्दसन्दोहमग्नाः
कञ्चित् कालं कलितवपुषो योगिनो यापयन्ति॥

नीत्वा कालं कतिपयमथो योगिनो योगसिद्धाः
सांसारीयात् प्रकृतिविहितात् पाशबन्धाद्विमुक्ताः ।
दोषातीतं विनयरहितं सर्व्वतो व्यापि सत्यं
सान्द्रानन्दं शिवमयममी धामपूर्णं विशन्ति॥

...ताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिस्सुतो
...चार्य्यशतावधान इति यो गौडोद्भवोऽभूत् कविः ।

विद्वन्मोदतरङ्गिणी ननु चिरञ्जीवेन तज्जन्मना
श्लक्ष्णे या रचितेह सप्तमपदं तस्यास्तरङ्गो गतः॥

इति श्रीमहामहोपाध्याय-श्रीचिरञ्जीवभट्टाचार्य-विरचित-
विद्वन्मोदतरङ्गिण्यां सप्तमस्तरङ्गः समाप्तः।

## अथ मष्टमस्तरङ्गः।

अथ वैष्णवः-

पातञ्जलविदमुद्दिश्य, किमहो! योगमार्गैर्ध्यायमानं शिवमेव मुक्तिदातृत्वेन स्तुवन्तो भवन्तः पश्यन्तु तावत्-

नारायणाराधनमन्तरेण यो मुक्तिमाकाङ्क्षति जीवलोकः
पोताधिरोहेण विनैव सोऽयं पयोनिधेः पारमपि प्रयातु॥

अत्रान्तरे शैवः-

सत्त्वादिभिश्चेश्वरूपोपपन्नैरन्यैरुपायैरपि निर्विकल्पम्।
पोताधिरोहेण विनैव केऽपि रामादिवत् सागरमुत्तरन्ति

अत्रान्तरे रामोक-पासः

मा व्यामोहः!

रामेति यन्नामजनाः स्मरन्तः संसारवारांनिधिमुत्तरन्ति।
स कस्य चेमस्य कृपामुपेत्य बबन्ध सेतुं जगदेकनाथः॥

अपिच-

ब्रह्मान्मुरारेरपरो न कश्चित् तस्यापि रूपाणि बहूनि सन्ति
रूपेषु तेष्वप्युपपन्नशीलान्न रामचन्द्रादपरो गरीयान् ॥

अत्रान्तरे कृष्णोपासकः-

राधादिगोपीजनहृक्चकोर-
निपीयमानाननपूर्णचन्द्रात् ।
वंशीनिनादार्जितजीवलक्षात्
कृष्णात् परः कः पुरुषः पुराणः ॥

अत्रान्तरे राधोपासकः-

किमहो ! श्रीराधामपि गोपीजनेषु गणयसि !

आकर्ण्याकर्ण्य-

कलिन्दकन्यापुलिने तटे वा गेहेऽन्यतो वा निवसन् कदापि।
यत्पादपद्मार्चनमन्तरेण न नन्दनो नन्दकिशोर एषः॥
यामीश्वरीत्वे परिकल्प्य यत्नादात्मानमावेश्य च दासभावे।
प्रसादमासाद्य कटाक्षभङ्गीमङ्गीचकारैव शिरःप्रणामैः

तेनापि गोपालकबालकेन
न्यवेशि या पुण्यलताफलत्वे ।
धन्योऽसि किं ते कथयामि राधां
तामन्यसामान्यतया ब्रवीषि ॥

कृष्णोपासकः-

सत्यं सत्यं अस्माभिरप्रणिधानेन तथोक्तम्, पश्य-प्राणेश्वरी दैवतदैवतस्य श्रीकृष्णदेवस्य तु राधिकैव । अद्यापिराधासहितोयदेषवृन्दावने नित्यविहारशाली॥

अपिच-

राधां विना ध्यायति यश्च कृष्णं
कृष्णं विना ध्यायति यश्च राधाम् ।
इमावुभावप्युपपन्नमोहौ
वृथाजनौ भक्तिरसानभिज्ञौ ॥

राधांविनातिष्ठतिनैवकृष्ण कृष्णंविनातिष्ठतिनैवराधा। साधारणानन्यरसैर्निमग्नौमग्नौमदीये हृदि खेलतस्तौ

श्रीरामोपासकः सस्मितम्-

किमहो ! शृङ्गाररसप्राधान्येनैव श्रीकृष्णस्य सर्वतो महत्वं प्रतिपादयसि ?

कृष्णोपासकः-

अहो ! श्रीरामचन्द्रस्यापि शृङ्गाररसप्राधान्य-मस्त्येव परन्तु विप्रलम्भप्रादायेति विशेषः ।

अत्रान्तरे वैष्णवः-

किमिति स्वमध्यत एव वृथा कोलाहलः प्रारब्धो युवाभ्याम्, पश्य-

य एव रामो हि स एव कृष्णो य एव कृष्णो हि स एव रामः

अनन्यभिन्नौ नहि रामकृष्णौ नारायणस्यावतरौ यदेतौ

कृष्णोपासकः सस्मितं सविनयम्-

प्रभो ! यद्यपि नारायणावतारत्वेनैव श्रीकृष्णस्य श्रीरामचन्द्रस्य च साम्यमायाति तथापि पूर्णावतारत्वेन श्रीकृष्णस्य प्राधान्यमस्त्येव, पूर्णावतारत्वन्तु श्रूयमाणमपि क्रियाविशेषैरनुमीयते, यथा-

आविर्भूय गदाब्जशङ्खचक्रचतुरो बिभ्रच्चतुर्भिर्भुजैः
ब्रह्माद्यैरुपगीयमानविभवः पीताम्बरो बालकः ।
कालिन्दीमतिवर्द्धमानसलिलामुल्लङ्घ्य चाल्पोदरद्
गत्वा गोकुलराजजामथ महो । मायामितोऽचालयत्॥

कृत्वा तत्र च पूतनादिकदनं यत् प्राणिभिर्दुष्करं
विश्वं विश्वमिदं निजोदरगतं संदर्श्य मात्रे पुनः ।
गोपीभिर्विजहार यः शिशुरपि प्रागल्भ्ययुक्तेन यः
अन्तर्गर्व्वमखर्व्वयत् सुरपतेरुद्धृत्य गोवर्द्धनम् ॥

आश्चर्यं जगतोऽधिकं जनयता हत्वा च कंसादिकं
संदर्श्याथ कृतान्तमन्दिरगतापत्यानि पित्रे पुनः ।
सुप्ता ये निशान्तरे मधुपुरीमध्यस्थिता यादवाः
नीता द्वारवतीं सती जलनिधेरन्तः क्षणान्मायया

किञ्च-

षोड़शसहस्रमजस्रकन्यकाः क्षितिभुजामुपभोक्तुम् ।
तावतीः समकरोन्निजमूर्त्तीस्तत्र तत्र भवने भुवनेशः॥

अपिच-

विचित्रदन्तानि सुलोचनानि
भ्रूभङ्गलीलाजितकार्मुकाणि ।
घोराणि सौम्यानि सुदीप्तिमन्ति
समन्ततः कानिचिदाननानि ॥

सुवर्त्तुलैः पाण्डवशोणनीलै-
रुग्रैरनेकाक्षिभिरञ्चितानि ।
करालदंष्ट्राणि भयङ्कराणि
भस्वान्ति वक्त्राणि तथापराणि ।

श्यामानि पीतानि तथा सितानि
रक्तानि वस्तूनि पिबन्ति भूयः ।
कालानलज्वालमिवोद्वमन्ति
मुखान्यथोल्कान्यपि विष्फुरन्ति ॥

इतस्ततः कानिचिदायतानि मुखानि नीलाचलजिह्वि-
कानि ।
वियत् तुरङ्गभरथादिरूढयुद्धोद्यतच्छत्रकदम्बकानि ॥

अनेकपादोदरमध्यवक्षो-
दिव्यास्त्रयुग्बाहुसहस्रकोटीः ।
नानाविधान्याभरणानि भास्वत्-
किरीटकोटीरपि संदधानम् ।
गन्धर्वविद्याधरसिद्धसाध्यवेतालयक्षैर्बहुभिश्च नागैः ।

सूर्येन्दुतारागणरुद्रमुख्यैरन्यैः सुरेन्द्रैरभितोऽप्युपेतम् ।
असङ्ख्यसूर्यस्फुरदंशुजालैर्दिशोदशव्याप्यविराजमानम्
आश्चर्यरूपं निजरूपमीदृक् यो दर्शयामासधनञ्जयाय

अपिच-

यो देवदैत्यावतरान् नरेन्द्रान्
निहत्य भूमेरवतार्य्य भारम् ।
क्षयं विधाय स्वकुलस्य लोकान्
स्वतेजसा व्याप्य दिवं जगाम ॥

रामादयोहंशावतराहरेश्चेद्भवन्ति सर्वेऽपिभवन्तु नाम।
परन्तु ते हन्त ! कथन्नु साम्यं भजन्तुकृष्णेण समन्तु तेन

इत्युदीर्य्यं विरते कृष्णोपासके रामोपासकः-

किमहो । श्रीरामचन्द्रस्य महिमानं न वेत्सि ।

आकर्णय आकर्णय-

चतुर्भुजः पीतदुकूलधारी
हारी सहस्रांशुसहस्रदीप्तिः ।
रामः परं ब्रह्म कुतोऽपि हेतोः
कौशल्ययालोकि पुरोऽवतीर्णः ॥
तया ततस्तोत्रशतोपगीतं
श्रुतस्तवाम्भोजभवादिदेवैः ।
चणाद्दरोरूपमरूपशाली
विहाय बालीकृतविग्रहोऽभूत् ।

अनन्यसाध्यामवधार्य्य यत्नात्
यां याचयामास हठान्मुनीन्द्रः।
निहत्य रक्षांसि चकार रक्षां
तामेव बालोऽपि महाध्वरस्य॥
शैवं त्रिलोकीविनिवासभाजां
बलादसाध्योद्धरणं धनुस्तत्।
यो हेलया श्रीरघुवंशहंसो
जगच्चमत्कारकरो बभञ्ज॥
दैवीं कलां कामपि कामरूपां
वसुन्धरायो निमयोनिजाताम्।
निजात्मजात्वे जनकेन नीतां
सीतां विनीतां परिणीतवान् यः॥
यो जमदग्न्याज्जगदेकमान्यात्
महाबलात् क्षत्रियकालरात्रेः।
मदोद्धतादुद्धततापशान्त्यै
तेजो निजं वैष्णवमाजहार॥
पितुः प्रतिज्ञाप्रतिपालनाय
राज्यं परित्यज्य जटा दधानः।
यो वल्कलेनाम्बरसंवृतः सन्
वनं गतो लक्ष्मणजानकीभ्याम्॥
लोकानलोकाद्भुतकारकापि

घोराणि घोरायुधदर्शनानि ।
निहत्य रक्षांसि चकार रक्षा-
मखिलां वने संवसतां मुनीनाम् ॥
अन्तर्हितायां जनकात्मजायां
कार्य्यार्थमर्थित्रिदशेश्वराणाम् ।
मायामयी काचिदलीकरूपा
सीता हृता तत्र च रावणेन ॥
लीलावशाद्दाशरथेरथास्य
साधारणस्येव जनस्य कोऽपि ।
व्यलोकि लोकैः सकलैर्बलीयान्
प्रियावियोगप्रभवो विकारः ॥

अवान्तरे दासपदं प्रपद्य रुद्रावतारो मिलितो हनूमान् ।
वनेचराणामथ वानराणां संमेलयामास चमूनमात्यः॥
समस्तरैर्दुस्तरसागरस्तैः सेतुं बबन्ध प्रतिबन्धहीनः ।
चमूसमूहेन विवेश रामो लङ्कामलङ्घ्यामपि कामरूपाम्॥
कारागृहं यासुरसुन्दरीणां महेन्द्रचन्द्रादिसुरेश्वराणाम्।
गम्यानया दानवमानवानां या राजराजानुजराजधानीम्
तत्रेन्द्रजिल्लक्ष्मणबाणलक्ष्यीभूत्वा समं राक्षसलक्षलक्षैः।
तच्छङ्कयातङ्कितसर्व्वलोकं विवेश कीनाशनिवेशमाशु॥
स्वर्गस्थहस्तीश्वरहस्तशुण्डं हस्तेन लङ्कास्थित आचकर्ष।
रःकुम्भकर्णः स जगाम धाम यमस्य रामेण शरेण भिन्नः॥

पुराहराद्दाप्तवरेणदृप्तो विजित्यभूयःसकलांस्त्रिलोकिम् ।
कैलाशमावेशवशेन शम्भोरावासमप्युद्धृतवान् बली यः॥
जगत्त्रयोपद्रवकारकस्य रणाङ्गनोन्मादवसं गतस्य ।
क्षणेनचिच्छेदशिरांसितस्यदशापि रामो दशकन्धरस्य॥
दत्वा प्रपन्नाय विभीषणाय लङ्काधिपत्यं स्ववंशवृद्धं ।
मायामयींतामुपनीयसीतामग्नौपरीक्षामिषतोविशेष्य॥
सम्पश्यतामेवसुरासुराणांब्रह्मादिकानांस्तुवतांपुरस्तात्
नःसार यामास हुताशकुण्डात्पुरातनीतामवतीर्ण-
लक्ष्मीम् ॥
विरिञ्चिपञ्चाननसत्प्रबन्धैःकाव्यैश्चवाचस्पतिभार्गवीयैः
स्तुतस्त्रिलोकीजनताभिरामिरश्चावचैश्चैव वचोविशेषैः।
नाकेशलङ्केशकपीशयूथैर्वृतोऽनुयेनानुगतःस्वकीयाम्।
पुरीमुदारो यमुदारकीर्त्तिर्विमानमारुह्यसमाजगाम।।
रुद्रैः समुद्रैर्वसुभिश्च सूर्य्यैः
सिद्धैश्च साध्यैर्दशभिर्दिगीशैः ।
ब्रह्मर्षिमुख्यैर्विधिनाभिषक्तः
स पालयामास महीमहीनाम् ।।
उत्तार्य्यभारंजगतांत्रयाणांनिहत्यरक्षांसिवितत्यधर्म्मम्।
रामोऽवसाने सकलामयोध्यांसहैवनीत्वा दिवमारुरोह
हतावशेषान् परिहृत्य बन्धून् कृष्णोऽर्पयित्वा वनिताः
मुकिन्दे ।

विख्यातं लोके कलिरीतिमेकां द्विवङ्गतः केवलमेक एव॥

तत् कतं कृष्णः क्रियाभिरपि श्रीरामचन्द्राधिकः ?

वैष्णवः हन्त। युवयोरद्यापि वर्त्तमान एव व्यामोहः। तद् युवाभ्यां प्रायशो न श्रुतो विष्णुसिद्धान्तः। तथा हि-

लोके गृहीताकृतिकस्य तस्य न वास्तवः कोऽपि विकार आस्ते।

परं जनस्यैव समस्तकार्य्यं लीलासविलासः पुरुषोत्तमस्य॥

त्यागो हि राजस्य वने निवासो दारापहारोऽम्बुधिसेतुबन्धः

रक्षोवधादिश्च विलासमात्रं चकार भूमाववतीर्य्य रामः॥

प्रकामखेलाव्रजसुन्दरीभिस्त्यागोऽपि तासां जलधौ निवास

भूभारनाशः स्वकुलक्षयश्च दारोपसर्गादि च कृष्णलीला॥

रामस्य भक्तोऽप्ययं कृष्णभक्तस्तथा नृसिंहादिकभक्तिशाली।

सर्व्वोऽप्ययं वैष्णवशास्त्रविद्भिर्न वेदितो वैष्णव एव लोके॥

यो द्वेष्टि रामं भजते तु कृष्णं यो द्वेष्टि कृष्णं भजते च रामम्।

इमावुभौ वैष्णवमार्गसर्गे वहिर्मुखत्वेन निवेदितौ स्तः॥

सर्व्वागमे वेदपुराणमध्ये नारायणादन्यतया न चोक्तौ।

लीलावतारौ किमु रामकृष्णौ कस्माद्विमुग्धो भवतीभ तन्तौ

क्वचित् प्रभूतं क्वचिदप्रभूतं कुतोऽपि हेतोरुपलभ्यमानम्।

ऐश्वर्य्यमेतन्मधुसूदनस्य न वर्द्धते नापि च हीयतेऽतः॥

उपासनायां निजचित्तवृत्तिः प्रवर्त्तते रूपमुपेत्य यद्य तु।

निजेच्छया तत्तद्रूपासनीयं सर्व्वं हि रूपं हरिरूपमेव ॥
अतोमहेसोऽपिविहायभेदबुद्धिं सदासेवत एव विष्णुम्।
रामश्च कृष्णश्चतथा नृसिंहतथा हयग्रीवमुखप्रभेदम् ॥

अथ शैवः सकोपम्

अहो भवानेव शिवं महेशं
वदन् वदत्यन्यमनेन सेव्यम्।
व्याघापातो वदतस्तवाय
मापाततो दूषणमाह सम्यक् ॥
किञ्चपश्य। ईशो महेशः परमेश्वरो वा
महेश्वरः केवलमीश्वरो वा
समाख्यया कः कथितो महद्भिः
शिवादृते वेदपुराणविद्भिः ॥

वैष्णवः सस्मितम्

किमहो! ईश्वर इति नाम्नैव ऐश्वर्य्यमायाति, पश्य तावद् भगवतो विष्णोः शिवस्य च तारतम्यमैश्व-र्य्यस्य। तथा हि

विरिञ्चिलोकादपि योजनाना
मष्टद्वयीकोटिसमुच्छ्रतो यः।
विस्तारभाक्षी रदसङ्ख्यकोट्या
सहस्रसूर्य्यैः ईशभिः समाभः ॥
नानाविधाभिः कान्तिभिर्मणियौ

विचित्रितष्षिलयो विभाति ।
वैकुण्ठनामा स हि विष्णुलोको
लोकेषु सर्व्वेषु जयत्युदारः ॥

नित्यप्रभामण्डलमध्यगामिवेश्मानियस्मिन्मणिनिर्म्मितानि
पीताभिरच्चैर्गरुडाङ्किताभिश्चलत्पताकाभिरलङ्कृतानि॥
तथोदयद्भानुसहस्रभानिवेश्मानिमाणिक्यमयानियानि।
महेन्द्रनीलैर्घटितानितानिक्कापितृक्कचितृध्वान्तमिवोद्व-
मन्ति ॥
प्रभाचमत्कारचयाश्रितानांतुल्याकृतीनांपथिकावलीनां
रथ्या सुपथ्यंपरितःप्रयाणेको वेदविश्वप्रतिविश्वभेदम्॥
श्रियविमानीकृतकुष्यकाणियस्मिन्विमानानिविमानगानि
शाखन्तिरत्नैःकलधौतलग्नैरितस्ततो वीथिषु सञ्चरन्ति॥
मनोऽनुरूपं च्यणमात्रलभ्यचिरानुबन्धप्रतिबन्धहीनम्।
देवौकसामीश्वरतामुतेत्यपुरौकसो यत्र सुखं भजन्ति॥
प्रभाविशेषोदयबद्धरूपातस्मिन्सभा काचिदचिन्त्यरूपा।
प्रद्योतनानां घथितेवलक्ष्मीर्विद्योतते नित्यतयैवनित्यम्॥
यथोचितंसेवनतत्परावा विनापि सेवामधिसंस्थितावा।
सदासमीपस्थितलभ्यमानायेपार्षदास्तान्तुसभामुपेताः॥
उद्यतोमानातिचद्रेहभासाप्रायेणदोर्भिः सहिताच-
तुर्भिः।
वचित्रनानाभरणप्रभाभिर्विराजमानाःसुखिनोजयन्ति

किञ्चित्प्रभामण्डलमध्यवर्त्तिसिंहासनेचुस्फुरदंशुजालाः।
चतुर्भुजाश्चक्रगदासरोजशङ्खान्दधानाश्च तथापवाणाः॥
पीताम्बरानूतनमेघभासःश्रीवत्सचिह्नारमणीयरूपाः।
सकुण्डलास्तेवलयाङ्गुरीयकेयूरहारादिविभूषणाढ्याः॥
किरीटिनीनाभिसरोजनालावक्षःस्थलालोलविशाल-
मालाः।
सारूप्यमुक्तिंसमवाप्तवन्तोजयन्तिसन्तोऽपिसहस्रशोऽन्ये॥
सिंहासनंतत्र सभान्तराले प्रभाविशेषं प्रतिबद्धरूपम्।
ताराहतेव्योमनिहन्यमानममन्दमिन्दोरिव मण्डलंतत्॥
नानाविधाभिर्द्युतिभिर्मणीनांनानाविधानामतिचित्र-
रूपम्।
तात्रैव चित्रार्पितविग्रहेण पुरोऽङ्कितंरत्नमयेनभाति।।
सिंहासनेऽस्मिन्भगवन्निषण्णोनारायणःसर्व्वजगन्निवासः
नवाम्बुदश्यामलकायकान्तिःपरिस्फुरन्मण्डलमध्यवर्त्ती॥
उद्यत्सहस्रांशुसमानकान्तिनखप्रभाभूषितपादपद्मे।
निरन्तरध्यायिमहामुनीनां रागादिवारक्ततलेदधानः।
पीतद्युतिद्योतिदुकूलशोभी नाभिह्रदोद्भूतसहस्रपत्रः।
श्रीवत्सचिह्नेहृदिकौस्तुभेनविराजमानो वनमालयाच॥
हारीतकेयूरविशेषधारी माणिक्यरत्नद्वयप्रकोष्ठः।
नानाभरत्नस्फुरदङ्गुरीयःप्रभातिकिर्मीरितदिग्विभागः॥
अलं चतुर्वर्गफलंददद्भिर्दोभिश्चतुर्भिश्चतुरोऽपिचैतान्।

विभ्रद्गदाचक्रसरोजशङ्खान्पार्श्वंस्फुरच्चापशराखिवह्निः
मकरकुण्डलमण्डलोद्दितनिशापतिनिर्जित लोचनः ।
भ्रुकुटदीधितिदीधिति सद्द्युतिःसमुनिसामससामसहंस-
वान् ॥

कमलयापरिसेवितपद्द्वयीकमलयामलयाभियतं स्तुतः ।
श्रुतिविशारदनारदशारदामुनिगणैर्निगमैरगमैः स्तुतः ॥
इति यथामतिरूपनिरूपणं भुवनमङ्गलमङ्गलरूपिणः ।
भगवतोऽद्यमयाकमलापतेस्तवविमोह विघातकृतेकृतम् ॥
शिवः श्मशानेच्छितिभस्मधूसरः कपालमालास्थिभुजङ्गभूषण
सतालवेतालपिशाचमण्डलैर्नटन्नटन्मत्तइवात्तभूषणः ॥

दिगम्बरो मुक्तजटो विरूपदृक्
ज्वलल्ललाटाग्निशिखावलेहितः ।
अमङ्गलं रूपमिदं दधत् कथं
भवज्जनानां विदधातु मङ्गलम् ॥
उपासको यो यदुपासनारतः
स तं समेतीति मतः श्रुतं मया ।
अतः शिवाराधनतः पिशाचतां
कथं न यायादिति मे निवेदय ॥

अनेनरूपेण च सम्प्रदानया क्रियाभिरेताभिरुदीरितस्थिति
महेश्वराख्यामपि लब्धवानयं महेश्वरत्वं कथमेतु वास्तवम् ॥
इति सस्मितमुक्त्वैवं विरते वैष्णवे, शैवः सकोपम्-

अनन्तरूपस्यशिवस्यलीलयाविहारशीलस्यविचित्रकर्मणः
अनेनरूपेणच भीषणेनतत्स्वरूपज्ञानिनं भवेत्कदाचन॥

किञ्च-

सुखं वा कुतः कुतस्तस्य दुःखं
कुतो वा सुन्दरत्वं कुतोऽसुन्दरत्वम्।
अनेकैः स्वरूपैरनेकैः प्रकारैः
सदा लीलया खेलतश्चिन्मयस्य॥

आकर्णय तावद्रूपान्तरमपि भगवती महेश्वरस्य-

स्थले क्वापि रम्ये तुषाराचलीये
वनीभूतरुद्राक्षवृक्षान्तराले।
मरुत्पक्षिसञ्चाररा‌हित्यभाजि-
स्फुरद्भूरिनिःशब्दभूमीप्रदेशे॥
चतुर्हस्तविस्तारिहस्तोच्छ्रितायां
चतुष्कोणगाशोकवृक्षान्वितायाम्।
कुशाजिनस्थशार्दूलचर्मास्तृतायां
निषण्णो महेशः शिलावेदिकायाम्॥
दधत् पान्नगीं मेखलां नागराजीं
समाबद्धशार्दूलकृत्तिं वसानः।
सुधाधामलेखालसद्भालपट्टो
जटाजूटसंवाहिगङ्गाप्रवाहः॥
समाबद्धवज्रासनस्तब्धमुद्रां

दृषन्वासिकाग्रै कविन्यस्तदृष्टिः ।
विशुद्धं चिदानन्दसन्दोहपूर्णं
निजं ज्योतिरालोकयन्नन्तरे वः ॥
स्वयं योगिभिर्योगतो योगमार्गे
सदा ध्यायमानः सदादिः शिवोऽयम् ।
गुरुर्योगिनां योगमार्गप्रवृत्त्यै
मरुत्संनिरोधात् स्थितः स्थाणुरूपः ॥
इदं रूपमेकं महेशस्य दृष्टै
रदृष्टं जगत्त्राणहेतोः प्रवृत्तम् ।
अथान्यत् स्वरूपं वदामि स्फुटन्ते
यदा शीलमास्ते हि कैलाशमध्ये ॥
सुमेरोः समीपे स कैलाशनामा
सदा राजते राजवत् शैलराजः ।
असावाश्रयः सिद्धदिव्यौषधीनां
समस्तर्त्तुभिः सेविताराभिधामा ॥
सदा सिद्ध साध्याप्सरोयक्षरक्षः
सगन्धर्व्वविद्याधरैः किन्नरैश्च ।
सदा सेवितो गुह्यकैः पन्नगेन्द्रैः
सदेवर्षिभिर्दैवतैर्दानवैः सः ॥
जयत्यत्र शैले हरैरङ्किताभिः
पताकावलीभिः सदा राजमाना

स्फुरद्रत्नवेदी वसच्चारुरूपा
पुरी स्फाटिकीचाटकाकीर्णमध्या ॥
इयं योगिनीडाकिनीहाकिनीभि-
र्वृता राकिनीशाकिनीलाकिनीभिः।
गणैर्भूतवेतालमुख्यैः परीता
पुरी फेरवैर्भैरवैर्भैरवीभिः ॥
तथा ब्रह्मनारायणेशादिदेवो-
द्गताभिर्युता शक्तिभिर्मातृकाभिः।
शिवस्यापि रुद्रादिरूपैरनेकैः
शिवायाश्च रौद्रादिरूपैरनेकैः ॥
इहोन्मत्तवाटीकपाटीकृतान्ति-
स्फुरत्पारिजातद्रुमालीवनाली।
स्फुरद्रत्नधारालसद्वेश्मतस्यां
वरीवर्त्ति सर्व्वोपरि राजमानम् ॥
सभाद्वारि नन्द्यादिवेत्रप्रहार-
स्फुरत्तत्किरीटाग्रविन्यस्तहस्तैः।
महेन्द्रादिदिक्पालवृन्दैः समस्तैः
कृतोपासना दूरतः स्तोत्रजालैः ॥
ज्वलज्ज्योतिरावेशदेदीप्यमाना
शिवाकारवह्निर्गणैः सेव्यमाना।
सदा ब्रह्मदेवर्षिभिः स्तूयमाना

सभा तत्र रम्या महाभागगम्या ॥
स्फुरल्लक्षचन्द्रानलनाथप्रकाशे-
ष्वनुप्राकारसिंहासने तत्सभायाम्।
त्रिलोकीजनन्या समं हैमवत्या
निषण्णो महेशो जगन्मङ्गलाय ॥
महासेनहेरम्बयोः खेलितेषु
स्मितास्यः कृतानन्ददृष्टिप्रकाशः ॥
समीपस्थितब्रह्मणा ब्रह्मघोषै-
श्चतुर्भी चतुर्भिर्मुखैः स्तूयमानः ॥
त्रिभिर्लोचनैः सूर्यसोमाग्निरूपै-
र्जटाभिः किरीटायिताभिः स्फुरन्ति ।
मुखान्यस्य पञ्चाञ्चितानिन्दुखण्डै-
रखण्डैश्च बिल्वीदलैः कुण्डलैश्च ॥
गले कालिमा कालकूटस्य यस्य
शरीरे च कर्पूरपूरोपमा ।
समस्ताङ्गसङ्गीन्यनेकानि भास्व-
दनेकाररत्नावलीभूषणानि ॥
गले कालमाला ललामा भुजङ्गो-
त्तमा, वासुकिः कङ्कणीभूत आस्ते ।
त्वचा द्वीपिनो मध्यदेशे तु यस्य
तडित्चन्द्ररेखावलीमण्डितेव ॥

अदो रूपमेकं महेशस्य किञ्चित्
तवोक्तं वदान्यद्भवस्य रूपम् ।
अधिक्षीरसिन्धुस्फुरद्रूपसिन्धु-
प्रकाशं यदास्ते मणिद्वीपमध्ये ।।

सुधाजलनिधावितं मणिमयान्तरीपं महत्-
तदीय लहरी शतम्पतति धौतपर्य्यन्तकम् ।
प्रभाचयचमत्क्रियासमुदयं सहस्रांशुमत्
सहस्रसमशेनिमस्फुरति लोकलोकोत्तरम् ।।

कदम्बघनकाननं बकुलपारिजातैः स्फुरत्
सकल्पतरुभिः सदा कुसुमितैश्च मन्दारकैः ।
भ्रमद्भ्रमरघोरणीपिकशुकालिमञ्जुध्वनि-
प्रकीर्णमभिशोभते तत इतोऽन्तरीपान्तरे ।।

वहिर्भवनभित्तयः स्फुरितपद्मरागोपलै-
र्गिरीन्द्रशिखरोपमैर्विरचिताश्च माणिक्यकैः
प्रभापटलनिर्भरैर्बिदधति स्वकीयैर्वनं
तदर्णवजलं नभः स्थलमतीव सिन्दूरितम् ।।

जयत्यधिकनममतं भुवनमत्र चिन्तामणे-
र्महोपलविनिर्मितं सकलदेवराजैः स्तुतम् ।
इतं परमसुन्दरीशतसहस्रसङ्कुलापिकै-
र्धृतप्रसरमङ्गारसैः परशिवे रसोल्लासिनी ।।

विरिञ्चिकमलापतिप्रभृतिभिः कृतोपासनै-

रिहैव परितोषितो नवकरैः स्तवानां शतैः
उदञ्चदरुणप्रभापटलशोभिमञ्चान्तरे
सदाशिवमयः शिवो विजयते शिवायोद्यतः॥
अयं त्रिनयनो भुजद्वययुतस्तथैकाननो
जटामुकुटमण्डितो विधुकलां ललाटे दधत् ।
अनेकमणिमौक्तिकैर्घटितभूषणाभूषितः
सितद्युतिसहस्रकद्युतिरतीव भातीश्वरः ॥
आकर्णय तावत् स्वरूपान्तरमपि भगवतोमहेश्वरस्य-
त्वदुक्तनारायणलोकतो हि यः
समुच्छ्रितः षोड़शकोटियोजनम् ॥
सुविस्तृतोऽसौ रदकोटियोजनैः
स भाति लोकः शिवलोकसञ्ज्ञकः ॥
अस्मिंस्तु लोके दशलचसूर्य्य-
समप्रकाशे निवसन्ति सन्तः।
सदाशिवाराधनतत्पराये
ते लचसूर्य्योपमितप्रकाशः ॥
असंख्यसूर्य्यस्फुरदंशुमण्डलः
सदो चिदानन्दमयो महेश्वरः ।
असंख्यसीमस्फुरदंशुमालया
स चेह शक्त्या रमते सदाशिवः॥
धराम्बुतेजोमरुदम्बराणि

यष्टाःद्विजः प्रीतकरो दिनेशः ।
इमा अपि स्पष्टमनेकमूर्त्ते-
रष्टौ प्रसिद्धाः खलु मूर्त्तयोऽन्याः ॥

देदीप्यमाना परितः स्फुरन्ती
तेजोमयी मूर्त्तिरथापरास्य ।
न हस्तपादादिकदेहसंस्था
यत्रास्ति सा योगिजनैकगम्या ॥

एतादृशस्यास्य महेश्वरस्य
विहारशीलस्य विचित्ररूपैः ।
तादृक्षमायातु हरिः कथं वा
स्वेनापि नेत्रेण समर्च्चको यः ॥

अत्रान्तरे कोऽपि समाजगाम
समस्तविद्यार्णवकर्णधारः ।
प्रगल्भपुंरूपधरादरेण
सरस्वती मूर्त्तिमतीव साक्षात् ॥

तं वीक्ष्य लोके श्रुतपूर्व्वकीर्त्तिं
तेजोविशेषानुमितस्वरूपम् ॥
विद्वत्समाजो नृपतिश्च दूरा-
दभ्युत्थितः सम्भ्रमनम्रदृष्टिः ॥

आगत्य च स-

ज्योतिर्दीप्यन्तिनाडीनियमितमरुतानीतशक्तिप्रभ

पश्यन्त्यानन्दसान्द्रं स्फुरदुरुमहसं योगिनो ह्यन्तरान्तः
स्वैवान्तर्मूर्त्तिमन्तं यमतिसकरुणं ब्रह्मविश्वादिरूपं
सोऽव्यादव्याजमव्याहतकृतिनिरतिं त्वामनीशोऽयमीशः

इत्यचे । अथ सर्व्वतोऽवलोक्य पुनः प्रभुं प्रत्याह

सुमण्डिता पण्डितमण्डलैरियं
भवत्सभा देवसभेव दृश्यते ।
अहो विचारः कतमः प्रवर्त्तते
ममैतदाकर्णनकर्षकौतुकम् ॥

अथ प्रभुः सविनयम्, भवद्गुणग्रामयशोऽतितर्पित-
श्रुतिप्रतिस्पर्द्धितया विलोचने ।
विषीदतः स्मातिपुराऽधुना पुनः
सुधाम्बुधारातनुतोऽवगाहनम् ॥

सम्प्रति पुनः प्रवर्त्तमानोऽयं शैववैष्णवयोर्विवादः ।
शैवः शिवं महत्त्वेन प्रतिपादयति, वैष्णवस्तु विष्णुं
तदत्र विषये माध्यस्थ्यमवलम्बयन्तो भवन्तोऽस्माकमीदृशं
संशयमपनयन्तु । अथ सकलविद्यानिधिर्विद्वान्-
किमत्र विषये माध्यस्थ्यमस्माकम् ? आकर्णय तावत्-
कालस्तुच्चतरः कलिः कलिमयस्तस्मिन् कियज्जीवितं
सम्पत्तिः कियती कियत्यपि मतिर्विद्याबलं वा कियत् ।
किं ब्रूमो महिमानमस्य तु महामोहस्य हास्यास्पदं
यत्तत्रापि च गर्वपर्वतधरो वर्वर्त्ति सर्व्वैर्जनः ॥

प्रभो ! तस्मादन्योन्यं सर्व्वथा गर्व्वसम्प्रदायसर्वेऽपि यदि वास्तवशास्त्रार्थं पर्य्यालोचयन्ति तदा नेदृशाः वादाः प्रभवन्ति । बर्ड्धास्मिन्नेव कलिबलिनि कलौ युगेऽधिगतकतिपयशास्त्रार्थैरेव पाषण्डपातैः पण्डितम्मन्यैर्मोहिताः शैवा विष्णुं वैष्णवंश्च शिवं निन्दन्तो भक्तिविशेषाभिमानिनो मुक्तिमाकाङ्क्षन्ति । वस्तुतस्तु-

मया पुराणोपपुराणयुक्ताः
साङ्गाश्च वेदाः स्मृतयः समस्ताः ।
शास्त्राणि सर्व्वाणि विलोकितानि
न क्वापि दृष्टः शिवविष्णुभेदः ॥
अहं पुनः पण्डितमण्डलींस्तान्
पृच्छामि सर्व्वानपि ते वदन्तु ।
श्रुतौ स्मृतौ शास्त्रपुराणमध्ये
तैः क्वापि दृष्टः शिवविष्णुभेदः ॥

अथसर्व्वेतार्किकप्रभृतयःपौराणिकाद्याश्चान्येयुगपदूचुः-

महेशनारायणयोर्विभेदो
न क्वापि दृष्टो न खलु श्रुतो वा ।
अद्यैतयोरेव मुखान्नवीनः
सर्व्वैरपि श्रूयत एव वादः ॥
शिवस्य विष्णोः परमुक्तिरेषा

पुरातनी श्रूयत एव सर्व्वैः।
यश्चानयोर्भेदधियं करोति
नरः सघोरं नरकं प्रयाति॥

अथ सकलविद्यानिधिर्विद्वान्-
प्रभो! अतो नयोर्भेदविधौ कदापि कार्य्या न
बुद्धिः सदुपासकेन।

हरे हरौ वापि मनः प्रसन्नं
यस्मिन् भवेत् सोऽयमुपासनीयः।
भक्तिश्च मुक्तिश्च ततो यथेच्छ-
मवाप्यते नूनमुपासकेन॥
शिवे तु भक्तिः प्रचुरा यदि स्या-
द्भजेच्छिवत्वेन हरिं तथापि।
हरौ तु भक्तिः प्रचुरा यदि स्या-
द्भजेद्धरित्वेन शिवं तथापि॥
शिवोऽपि विष्णुं भजते कदाचि-
द्विष्णुः शिवं वा भजते कदापि।
परस्पराभेदविबोधनार्थ-
मथ प्रवृत्तत्रर्थमुपासनायाः॥
ये चात्मनो नूनमभिन्नतायां
शरीरभेदादपि भेदभाजः।
तेषां समाधानकृते हरेण

देहार्द्धहारी हरिरप्यकारि ॥
हरे हरौ वापि यथा कथञ्चि-
न्निष्कामभक्तिः समुपार्जनीय ।
भक्तेः फलं योगमुदाहरन्ति ।
योगेन मुक्तिं समुपादिशन्ति ॥
यो वैष्णवः सोऽपि च योगकाले
शक्तिस्वरूपेण विचिन्त्य विष्णुम् ।
शिवात्मके धामनि योजयेत् स्या-
दतश्चिदानन्दमयो हि भक्तः ॥

अथ सानन्दं साधु साध्विति सर्वैरुक्तं नासाग्र-मालोकयन् पुनराह-

ये केचित् पुरुषा निजात्मनि चिदानन्दप्रबोधाप्तये
यत्नेनाखिलवासनाहृतिविधिं वाञ्छन्ति वाञ्छन्तु ते ।
वाञ्छामो वयमाशु तत्फलकृते चित्ते नरीजृम्भताम्
अस्माकन्तु निरन्तरं हरिहराद्वैतात्मिका वासना ॥
द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिस्तुती
भट्टाचार्य्यशतावधान इति यो गौडोद्भवोऽभूत् कविः ।
विद्वन्मोदतरङ्गिणी ननु चिरञ्जीवेन तज्जन्मना
शास्त्रे या रचितेह पूर्त्तिमगमत् तस्यास्तरङ्गोऽष्टमः॥

इति महामहोपाध्याय चिरञ्जीवभट्टाचार्य्यविरचितायां विद्वन्मोदतरङ्गिण्यामष्टमस्तरङ्गः समाप्तः ।

समाप्तेयं विद्वन्मोदतरङ्गिणी ॥

# मुद्राराक्षसम् ।

## प्रथमोऽङ्कः ।

—::०::—

### नान्दी । (क)

धन्या केयं स्थिता ते शिरसि, शशिकला, किन्नु नामैतदस्याः,
नामैवास्या स्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि नेन्दुं, कथयतु विजया न प्रमाणं यदीन्दु-
र्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः॥(१)

---

(क) नान्दीति । नन्दयति लोकानिति नान्दी शुभशंसनेन लोकानन्दजननात् तदुक्तं आशीर्व्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति कथ्यते इति ।

(१) सा चात्र हरपार्व्वत्योरुक्तिप्रत्युक्तिरूपया उच्यते धन्येति। ते तव शिरसि स्थिता इयं का धन्या सुभगा ? इति पार्व्वती प्रश्नः, अनेन च शिरःस्थिताया धन्यत्व कथनेन आत्मनो दौर्भाग्यं सूचितम्। शशिनः चन्द्रस्य कला अंशविशेषः इति हरस्योत्तरम्। नु भोः ! अस्याः प्रत्यक्षदृश्यमानायाः स्त्रिया इति शेषः किमेतत् शशिकलेति नाम ? इति द्वितीयप्रश्नः। अस्याः तदेव शशिकला एव नाम, एतत् ते तव परिचितमपि ज्ञातमपि कस्य हेतोः कथं विस्मृतम् इति द्वितीयोत्तरम् । नारीं तव शिरसि स्थितां स्त्रियं पृच्छामि तद्विषयकी मे प्रश्नः। इन्दुं चन्द्रं प्रति न इति तृतीयप्रश्नः। यदि इन्दुः प्रमाणं लधाक्यादिति शेषः न तदा विजया तवैव सहचरीति शेषः कथयतु इति तृतीयोत्तरम् इति एवम्प्रकारेण देव्याः सकाशात् देव्ये' इति पाठान्तरम्। सुरसरितं गङ्गां निह्नोतुं गोपितुं इच्छोः अभिलषतः विभोः हरस्य शाठ्यं चातुरी वः युष्मान् रङ्गस्थानिति शेषः। अव्यत्

अपि च ।

पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातैः
सङ्कोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम् ।
दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीते-
रित्याधारानुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्यम् ॥ (२

नान्द्यन्ते ।

सूत्रधारः । (ख) अलमतिप्रसङ्गेन । (ग) आज्ञापितोऽस्मि परिषदा यथाद्य सामन्तवटेश्वरदत्तपौत्रस्य महाराजपद-

---

पायात् । अत्र स्रग्धरावृत्तं म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति लक्षणात् ।

(२) पादस्येति । पादस्य चरणस्य स्वैरपातैः यथेष्टं विक्षेपणैः आविर्भवन्तीं उत्पद्यमानां अवनेः पृथिव्याः अवनतिं अधोगतिं रक्षतः निवारयतः अवनेरवनतिभयेन मन्दं मन्दं पादविक्षेपं कुर्व्वतः, सर्व्वलोकातिगानां अतिदीर्घतया अतिक्रान्तभुवनत्रयाणां दोष्णां भुजानां सङ्कोचेन यथेष्टप्रसारणाभावात् कुण्ठनेनैव मुहुः वारंवारं अभिनयतः रसादिव्यञ्जनार्थं हस्तपादादिचेष्टां कुर्व्वतः, दाहभीतेः भस्मीकरणशङ्कया लक्ष्येषु दृष्टिविषयेषु ज्वलनकणमुचं अग्निस्फुलिङ्गवर्षिणीं अतएव उग्रां दारुणां दृष्टिं तृतीयनेत्रं न बध्नतः न क्षिपतः त्रिपुरविजयिनः त्रिपुरासुरं जित्वा सानन्दस्येति यावत् आनन्दकाले एव नृत्यते इति भावः । हरस्य आधारानुरोधात् आधारस्य पादविक्षेपादीनामाश्रयस्य पृथिव्यादेरनुरोधात् ध्वंसी माभूदित्यभिप्रायात् इति पूर्व्वोक्तरूपं दुःखनृत्यं कुण्ठितनर्त्तनं वो युष्मान् सभासद इति शेषः पातु रक्षतु । अत्रापि स्रग्धरावृत्तम् ।

(ख) नान्द्यन्ते सूत्रधार इति नान्द्या अत्र अष्टपादात्मिकाया उक्तरूपाशीर्व्वादरूपाया अन्ते अवसाने सूत्रधारः तदाख्यः प्रधान नटः । नाट्योपकरणादीनि सूत्रमित्यभिधीयते । तत् धारयतीत्यर्थे सूत्रधारो निगद्यते इति लक्षणात् । कथयतीति प ... सर्वेण ।

(ग) तत्र ... नाटके तत्कर्त्तादीनां कीर्त्तनस्य अवश्य कर्त्तव्यत्वात् तदाह

भाक् पृथुसूनोः कवेर्विशाखदेवस्य कृतिर्मुद्राराक्षसं(घ) नाम नाटकं (ङ) नाटयितव्यमिति । यत् सत्यं काव्यविशेष-वेदिन्यां(च) परिषदि प्रयुञ्जानस्य ममापि चेतसि सुमहान् परितोषः प्रादुर्भवति ।

चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः ।
न शालेः स्तम्बकरिता वप्तुर्गुणमपेक्षते ॥(३)

तद्यावदिदानीं गृहं गत्वा गृहिणीमाहूय गृहजनेन(छ) सह सङ्गीतकमनुतिष्ठामि । परिक्रम्यावलोक्य च । इमे नो गृहा-स्तद्यावत् प्रविशामि । नाट्येन प्रविश्यावलोक्य च । अये तत्

---

आज्ञापित इति परिषदा सभ्यजनेन, नाटककर्त्ता कविर्विशाखदत्तः । यश्च अधिराजोपाधिकस्य वटेश्वरदत्तस्य पौत्रः, महाराजोपाधिकस्य पृथोः पुत्रः ।

(घ) मुद्राराक्षसं मुद्रापरिगृहीतः राक्षसोऽनेति मध्यपदलोपी बहुव्रीहिः ।

(ङ) नाटकमिति । नाट्येन प्रयोज्यं दृश्यकाव्यमित्यर्थः । तदुक्तम् ।

नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ॥
दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः ।
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ॥

(च) काव्यविशेष वेदिन्यां काव्यस्य विशेषः उत्कर्षापकर्षाधायकोगुणः तद्वे-दिन्यां तज्ज्ञाने निपुणायां परिषदि सभायां प्रयुञ्जानस्य नाट्येन अभिनयतः ।

(३) चीयत इति । बालिशस्य अज्ञस्यापि कृषिः सत्क्षेत्रपतिता सति क्षेत्रे उत्-कृष्टभूमौ उर्व्वरायां भुवीत्यर्थः पतिता कृता सती चीयते वर्द्धते फलातिशय-मुत्पादयतीति यावत्, तथाहि शालेः धान्यस्य स्तम्बकरिता पुष्कलता प्राचुर्य-मित्यर्थः वप्तुः बीजरोपकस्य कर्षकस्य गुणं अभिज्ञतादिकं न अपेक्षते नाकाङ्क्षती-त्यर्थः । अनुष्टुप्वृत्तमिदम् ।



(छ) तद्यावदिति । गृहजनेन गृहिण्या इत्यर्थः न गृहं गृहमित्याहुर्गृहिणी

किमिदमस्मद्गृहेषु महोत्सव इव दृश्यते स्वस्वकर्म्मणि अधिकतरं अभियुक्तः परिजनः। तथाहि

वहति जलमियं पिनष्टि गन्धान्
इयमियमुद्ग्रथते स्रजो विचित्राः।
मुसलमिदम् इयञ्च पातकाले
मुहुरनुयाति कलेन हुङ्कृतेन ॥(४)

(ज)भवतु कुटुम्बिनीमाहूय पृच्छामि। नेपथ्याभिमुखमवलोक्य।

गुणवति उपायनिलये! स्थितिहेतो! साधिके! त्रिवर्गस्य।
मद्भवननीतिविद्ये! कार्य्यात् आर्य्ये! द्रुतमुपेहि ॥(५)

---

गृहमुच्यते इति भागवत वचनात्। नाट्येन कर्त्तव्याभिनयेन। अभियुक्तः अभिनिविष्टः अभिरत इति यावत्।

(४) अभियोगप्रकारमाह वहतीति। उद्ग्रथते ग्रथ्नाति कलेन मधुरास्फुटेन अनुयाति अनुकरोति। पुष्पिताग्रावृत्तं। अयुजिन युगरेफतो मकारो युजितु नजौ जरगाश्च पुष्पिताग्रा, इति लक्षणात्।

(ज) भवतु यदिति शेषः। कुटुम्बिनीं गृहिणीं नेपथ्याभिमुखं नेपथ्यस्य नाट्यशालायाः सज्जागृहस्येति यावत् अभिमुखं सम्मुखम्।

(५) उपायनिलय इति। उपायानां संसारसाधनीभूतव्यापाराणां निलय! आश्रयभूते इत्यर्थः स्थितिहेतो! स्थितेः लोकयात्रायाः हेतो साधयित्रि! त्रिवर्गस्य त्रयाणां धर्म्मार्थकामानां सांसारिकव्यापाराणां पुरुषार्थानां साधिके! सम्पादिके! मद्भवननीतिविद्ये! मम भवनं मद्भवनं तत्र या नीतिः इति कर्त्तव्यता तस्या विद्येव विद्या तत्सम्बुद्धौ, उपदेष्ट्रि इति यावत् आर्य्ये! मान्ये! साधुशीले! वा कार्य्यात् प्रयोजनवशात् द्रुतं शीघ्रं उपेहि समीपमागच्छ। अत्रार्य्यावृत्तं। यस्याः पादे प्रथमे द्वादशमात्रा स्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति लक्षणात्।

प्रविश्य नटी। अज्जउत्त! इअह्मि असाणिओएण मं अणुगेह्णदु अज्जो।(१)

सूत्र। आर्य्ये! तिष्ठतु तावदाज्ञानियोगः, कथय किमद्य भवत्यां भगवतां (क) ब्राह्मणानामुपनिमन्त्रणेनैतत् कुटुम्बकमनुगृहीतम्, अथ वा अभिमता भवनं अतिथयः प्राप्ता यदेषः पाकविशेषारम्भः।

नटी। अज्ज आमन्तिदा मए भअवन्तो बह्मणा।(२)

सूत्र। कथय कस्मिन्निमित्ते।

नटी। उवरज्जदि किल भअवं चन्दोत्ति। (३)

सूत्र। क एवमाह।

नटी। एवं क्खु णअरबासी जणो मन्तेदि।(४)

सूत्र। आर्य्ये! कृतश्रमोऽस्मि चतुःषष्ठ्यङ्गे-ज्योतिः-शास्त्रे तत् प्रवर्त्त्यतां भगवतो ब्राह्मणानुद्दिश्य पाकः, चन्द्रोपरागं (ज)प्रति तु केनापि विप्रलब्धासि। पश्य

(६)क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम्।

---

[१] आर्य्यपुत्त्र! इयमस्मि आज्ञानियोगेन मामनुगृह्णातु आर्य्यः।

(२) आर्य्य! अद्य आमन्त्रिता मया भगवन्तो ब्राह्मणाः।

(३) उपरज्यति किल भगवान् चन्द्र इति।

(४) एवं खलु नगरवासी जनो मन्त्रयति।

---

[क] उपनिमन्त्रणं भोजनार्थं निमन्त्रणम्। कुटुम्बकं परिजनः। अभिमताः वाञ्छिताः।

(ज) चन्द्रोपरागं चन्द्रग्रहणमित्यर्थः। विप्रलब्धा प्रतारिता।



[ (६) विप्रलम्भं दर्शयन्नाह क्रूरग्रह इति। क्रूरग्रहः पापग्रहः स केतुः राहुः केतु-

अभिभवितुमिच्छति बलात्— इत्यर्द्धोक्ते ।

नेपथ्ये ।

आः ! क एष मयि स्थिते चन्द्र मभिभवितुमिच्छति बलात् ।

सूत्र । रक्षत्येनं तु बुधयोगः ।

नटी । अज्ज ! को उण एसो धरणिगोअरो भविअ चन्दं गहाभिजोआदो रक्खिदुं इच्छदि (ट)

सूत्र । आर्य्ये ! यत् सत्यं मयापि नोपलक्षितः । भवतु भूयोऽभियुक्तः (ठ) स्वरव्यक्तिमुपलप्स्ये । क्रूरग्रह इत्यादि पुनस्तदेव पठति ।

नेपथ्ये ।

आः ! क एष मयि स्थिते चन्द्रगुप्तमभिभवतुमिच्छति बलात् ।

सूत्र । आकर्ण्य । आं ज्ञातम् । कौटिल्यः—

नटी । भयं नाटयति (ड) ।

---

(ट) अज्जेति । आर्य्ये ! कः पुनरेष धरणीगोचरो भूत्वा चन्द्रं ग्रहाभियोगात् रक्षितुमिच्छति सं० । धरणीगोचरः पृथिवीस्थः ग्रहाभियोगात् राहोराक्रमणात् ।

---

ग्रहेनात्र लक्षणया राहुरुच्यते तस्यैव ग्रासकतायाः शास्त्रीयत्वात्, पक्षे क्रूरग्रहस्वरूपी राक्षसः सकेतुः मलयकेतुसहाय इत्यर्थः । चन्द्रं असम्पूर्णमण्डलमित्यपपाठः पाठस्तु चन्द्रमसं पूर्णमण्डलमिति असम्पूर्णताया एव ग्रासप्रतिबन्धकत्वे न पुनःरक्षति एनं तु बुधयोग इत्यंशस्य वैयर्थ्यापत्तेः । बुधयोगः बुधग्रहसहवासः तस्य चोपरागं प्रति प्रत्यूहत्वकीर्त्तनात् । पक्षे बुधेन पण्डितेन चाणक्येन योग इत्यर्थः ।

(ठ) अभियुक्तः निविष्टः अवहित इत्यर्थः । स्वरव्यक्तिं स्वरेण कण्ठस्वरविशेषेण विशिष्टं जनं उपलप्स्ये ज्ञास्यामीत्यर्थः ।

(ड) नाटयति अभिनयति नटकर्म्मणा शरीरादिचेष्टया भयं व्यञ्जयति ।

सूत्र । ——कुटिलमतिः स एष येन
क्रोधाग्नौ प्रसभमदाहि नन्दवंशः ।
चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नो
मौर्य्येन्दोर्द्विषदभियोग इत्यवैति ॥(७)

तदित आवां गच्छावः । इति निष्क्रान्तौ ।

प्रस्तावना । (ढ)

ततः प्रविशति मुक्तां शिखां परामृशन् चाणक्यः । (ण)

चाणक्यः । कथय क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलात् ।

---

(७) कौटिल्यश्चाणक्यः अतिक्रूरत्वात् अन्वर्थतया तदाख्यया प्रसिद्धः । कुटिलमतिः निष्ठुरमनाः, येन क्रोधाग्नौ नन्दवंशः प्रसभं हठात् अदाहि भस्मीकृतः । स एष चाणक्यः चन्द्रस्य ग्रहणमिति श्रुतेः श्रवणात् सनाम्नः तुल्यनामधेयस्य चन्द्र सदृशनाम्नः मौर्य्येन्दोः मुरानाम्नी नन्दस्य राज्ञः काचित् किङ्करी आसीत् तस्या अपत्यं पुमान् मौर्य्यः स इन्दुः चन्द्र इवेति तथोक्तस्य चन्द्रगुप्तस्य द्विषदभियोगः द्विषद्भिः शत्रुभिरभियोगः आक्रमणमिति भावः । अवैति अवगच्छति बुध्यते इत्यर्थः । उपैतीति पाठे उपगच्छति जानातीत्यर्थः । प्रहर्षिणीवृत्तं त्र्याशाभिर्मनजरगाः प्रहर्षिणीयमिति लक्षणात् ।

(ढ) प्रस्तावनेति प्रस्ताव्यते उद्भाव्यते अनयेति तथा चोक्तम् ।

नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते ॥
आमुखं तद्विजानीयात् बुधैः प्रस्तावनेति च ॥

अत्र नट्या सह सूत्रधारस्य संलापेन प्रस्ताव्यविषयस्य उद्भावनादियं प्रस्तावना ।

(ण) तत इति । मुक्तां बन्धरहितां । परामृशन् स्पृशन् ।

आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य ।
जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ॥(८)

अपि च ।

नन्दकुलकालभुजगीं कोपानलबहललोलधूमलताम् ।
अद्यापि बध्यमानां बध्यः को नेच्छति शिखां मे ॥(९)

अपि च । उल्लङ्घयन् मम समुज्ज्वलतः प्रतापं
कोपस्य नन्दकुलकाननधूमकेतोः ।
सद्यः परात्मपरिणामविवेकमूढः
कः शालभेन विधिना लभतां विनाशम् ॥(१०)

---

(८) चन्द्रगुप्ताभिभवस्य अशक्यतां दर्शयति आस्वादितेति ।

को जनः जृम्भा शारीरजाड्यपरिहरणक्रियाविशेषः तया विदारितं प्रसारितं मुखं येन तथोक्तस्य हरेः सिंहस्य सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केशरी हरिरित्यमरः । मुखात् द्वौ रदौ दन्तौ यस्य स द्विरदः हस्ती तस्य शोणितं द्विरदशोणितं गजरुधिरं तत आस्वादितेन पीतेन द्विरदशोणितेन शोणा रक्तवर्णा शोभा यस्याः तां सन्ध्यारुणां सन्ध्यारागेण अरुणां लोहितवर्णां शशलाञ्छनस्य चन्द्रस्य कलामिव स्फुरन्तीं दीप्यमानां दंष्ट्रां परिभूय हरिमिति शेषः । हर्तुं इच्छति सिंहाभिभवेन तद्दन्तग्रहणेच्छेव मदभिभवेन चन्द्रगुप्तश्रीहरणेच्छा स्वनाशिनी असाध्या चेति भावः । वसन्ति[illegible] वृत्तं ज्ञेयं वसन्ततिलकं तभजाजगौग इति लक्षणात् ।

(९) वध्यः वधार्हः को जनः नन्दकुलस्य कालभुजगीं कृष्णसर्पीं कोपः अनल इव तस्य बहला गुर्व्वी धूमलता इव तां [illegible] शिखां अद्यापि प्रतिज्ञापूरणेऽपीव्यर्थः वध्यमानां न इच्छति । आर्य्या[illegible]म् ।

(१०) परात्मपरिणामविवेकमूढः [illegible] यः परिणामः उन्नतिः अवनति र्वा तस्य विवेकः विशेषज्ञानं त[illegible]ज्ञः परः स्वीवा कीदृक्

शार्ङ्गरव ! शार्ङ्गरव !

प्रविश्य शिष्यः । उपाध्याय ! आज्ञापय ।

चाण । वत्स ! उपवेष्टुमिच्छामि ।

शिष्यः । उपाध्याय ! नन्वियं सन्निहितवेत्रासनैव द्वारप्रकोष्ठशाला तदस्यामुपवेष्टुमर्हति उपाध्यायः ।

चाण । वत्स ! (त)कार्य्याभियोग एव अस्मान् आकुलयति न पुनरुपाध्यायसहभूः शिष्यजने दुःशीलता । नाट्येनोपविश्य आत्मगतम् । (थ) कथं प्रकाशतां गतोऽयमर्थः पौरेषु, यथा किल नन्दकुलविनाशजनितरोषो राक्षसः पितृवधामर्षितेन सकलनन्दराज्यपरिपणनप्रोत्साहितेन(द)पर्वतकपुत्रेण मलयकेतुना सह सन्धाय, तदुपगृहीतेन च महता म्लेच्छ-

---

क्षमतावान् इति ज्ञानविहीन इत्यर्थः परिमाणेति पाठेऽपि तथैवार्थः । को जनः नन्दकुलमेव काननं तस्य धूमकेतुः अग्निरिव तस्य समुज्ज्वलतः दीप्यमानस्य मम कोपस्य प्रतापं तेजः उल्लङ्घयन् अतिक्रामन् शलभेन पतङ्गोचितेन विधिना व्यापारेण अग्निप्रवेशरूपेण सद्यः तत्क्षणात् विनाशं लभतां प्राप्नोतु । वसन्ततिलकं वृत्तम् ।

(त) कार्य्याभियोगः कार्य्ये वैरनिर्यातनरूपे व्यापारे अभियोगः अभिनिवेशः एव अस्मान् आकुलयति व्याकुलीकरोति कार्य्यान्तरव्यासक्तस्यापि तवाह्वाने मुखरयतीत्यर्थः । उपाध्यायानां सहभूः स्वाभाविकी शिष्यजने शिष्यजनं प्रतीत्यर्थः दुःशीलता निष्ठुराचारः न पुनः आकुलयति । शिष्ये स्वकार्य्यव्यासक्तेऽपि गुरुभिः कार्य्यान्तरे नियुज्यते तच्च दौःशील्यमेवेति भावः ।

(थ) आत्मगतं स्वगतं सर्व्वजनैरश्रवणीयमिति क्रियाविशेषणम् । यत्तु श्रव्यं न सर्व्वस्य स्वगतं तदिहोच्यते इति वचनात् ।

(द) परिपणन प्रोत्साहितेन परिपणनं स्वतुल्येन दानाङ्गीकारः तेन प्रोत्साहितेन जनितोत्साहेन ।

राजेन परिवृतो (ध) वृषलमभियोक्तुमुद्यत इति । विचिन्त्य । अथ वा येन मया सर्वलोकप्रकाशं नन्दवंशवधं प्रतिज्ञाय निस्तीर्णा दुस्तरा प्रतिज्ञासरित् सोऽहमिदानीं प्रकाशीभवन्तमपि (न) एनमर्थं न समर्थः किं प्रशमयितुमिति ।

कुत एतत् । यस्य मम ।(प)

श्यामीकृत्याननेन्दून् रिपुयुवतिदिशां सन्ततैः शोकधूमैः
कामं मन्त्रिद्रुमेभ्यो नयपवनहृतं मोहभस्म प्रकीर्य्य ।
दग्ध्वा संभ्रान्तपौरद्विजगणरहितान् नन्दवंशप्ररोहान्
दाह्याभावान्न खेदात् ज्वलन इव वने शाम्यति क्रोधवह्निः॥(११)

---

(ध) वृषलं वृषं धर्म्मं लाति नाशयतीति वृषलः शूद्रः तं चन्द्रगुप्तं शूद्रागर्भजातत्वादस्य वृषलत्वम् ।

अभियोक्तुं आक्रमितुम् ।

(न) एनमर्थं मलयकेतुसहायेन राक्षसेन क्रियमाणं चन्द्रगुप्ताभियोगमित्यर्थः ।

[प] यस्य ममेति पदद्वयमनन्तरोक्ते पद्ये अनुषञ्जनीयम् ।

[११] श्यामीकृत्येति । यस्य मम क्रोधवह्निः कोपानलः सन्ततैः सुविस्तृतैः शोक धूमैः शोकाः पत्यादिवियोगजनिताः खेदाः एव धूमाः तैः रिपुयुवतिदिशां रिपूणां :युवतय एव दिशः तासां आननानि मुखानि एव इन्दवः तान् श्यामीकृत्य मलिनीकृत्य मन्त्रिद्रुमेभ्यः मन्त्रिण एव द्रुमाः वृक्षाः तेभ्यः नयः शत्रुदमनार्था : नीतिएव पवनः तेन हृतं चालितं मोहः कर्त्तव्यमूढ़ता एव भस्म तत् कामं यथेष्ट प्रकीर्य्य विक्षिप्य सम्भ्रान्तद्विजगणरहितान् सम्भ्रान्ता मान्या ये पौरा एव द्विजगणा पक्षिसमूहा तैः रहितान् तद्व्यतिरिक्तानित्यर्थः । नन्दवंशप्ररोहान् नन्दस्य वंश एव वंश तस्य प्ररोहान् अङ्कुरान् शिशुपर्य्यन्तान् नन्दवंशान् इत्यर्थः । दग्ध्वा भस्मीकृत्य दाह्यस्य अभावात् असत्त्वात् न खेदात् परिश्रमात् वने ज्वलन इव दावानल इव शाम्यति । उपरमति स्रग्धरावृत्तम् ॥

अपि च ।

शोचन्तोऽवनतैर्नराधिपभयाद्धिक्शब्दगर्भैर्मुखै
र्मामग्रासनतोऽवकृष्टमवशं ये दृष्टवन्तः पुरा ।
ते पश्यन्तु तथैव सम्प्रति जना नन्दं मया सान्वयं
सिंहेनेव गजेन्द्रमद्रिशिखरात् सिंहासनात् पातितम्॥(१२

सोऽहमिदानीमवसितप्रतिज्ञाभरोऽपि (प) वृषलापेक्षया शस्त्रं धारयामि ! येन मया ।

समुत्खाता नन्दा नव हृदयरागा इव भुवः
कृता मौर्य्ये लक्ष्मीः सरसि नलिनीव स्थिरपदा ।
द्वयोः सारं तुल्यं द्वितयमभियुक्तेन मनसा
फलं कोपप्रीत्योर्द्विषति च विभक्तं सुहृदि च ॥(१३)

---

[१२] शोचन्त इति । ये जनाः पुरा नराधिपभयात् राजभयात् धिक्शब्दगर्भैः धिक् राजानमितिशब्दः गर्भे अभ्यन्तरे येषां तैः अस्पष्टधिक्शब्दैः अवनतैः निन्दितकर्म्मणो दर्शनेऽपि दोषशङ्कया नम्रीकृतैः मुखैः विशेषणे तृतीया । शोचन्तः सन्तः मां अग्रासनतः उत्कृष्ट-याज्ञीय-ब्राह्मणासनात् अवकृष्टं च्यावितं अवशं अधीनं प्रतीकारासमर्थमित्यर्थः दृष्टवन्तः ते जना इदानीं सिंहेन अद्रिशिखरात् पर्व्वतशृङ्गात् गजेन्द्रमिव सान्वयं सवंशं पुत्रादिसहितं नन्दं मया सिंहासनात् पातितं भ्रंशितं पश्यन्तु ।

शार्द्दूलविक्रीड़ितं वृत्तं सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्द्दूलविक्रीड़ितमिति लक्षणात् ।

[प]अवसितप्रतिज्ञाभरः तीर्णप्रतिज्ञ इत्यर्थः । वृषलापेक्षया चन्द्रगुप्तानुरोधेन ।

[१३]समुत्खाता इति मया च हृदयरागा इव हृदयात् रागा विषयवासनारूपा अन्तःशत्रव इव भुवः पृथिव्या योगानन्दस्तत्पुत्रा अष्टौ इति नवनन्दाः समुत्खाताः समूलमुन्मूलिता नवनन्दा [illegible] पुरातनमनु अन्वेयम् ।

अथ वा, अगृहीते राक्षसे, किमुत्खातं नन्दवंशस्य, किं वा स्थैर्यमुत्पादितं चन्द्रगुप्तलक्ष्म्याः। विचिन्त्य। अहो, राक्षसस्य नन्दवंशे निरतिशयो भक्तिगुणः; स खलु, कस्मिंश्चिदपि जीवति नन्दान्वयावयवे, वृषलस्य साचिव्यं ग्राहयितुं न शक्यते। अतः तदभियोगं प्रति, निरुद्योगैरस्माभिरवस्थातुमयुक्तमित्यनयैव बुद्ध्या, तपोवनगतोऽपि घातितस्तपस्वी नन्दवंशीयः सर्वार्थसिद्धिः, यावदसौ मलयकेतुमङ्गीकृत्यास्मदुच्छेदाय विपुलतरं प्रयत्नमुपदर्शयत्येव। प्रत्यक्षवदाकाशे [३] लक्ष्यं बद्ध्वा साधु अमात्य राक्षस! मन्त्रिबृहस्पते! साधु, कुतः।

ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते,
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया।

---

लक्ष्मीः राजश्रीः सरसि नलिनीव मौर्ये चन्द्रगुप्ते स्थिरपदा चिरस्थायिनी कृता। अभियुक्तेन अभिनिविष्टेन आग्रहवता मनसा द्वयोः कोपप्रीत्योः क्रोधानुरागयोः तुल्यमनुरूपं सारं उत्कृष्टं हितयं द्विविधं निग्रहानुग्रहरूपं फलं द्वियति शत्रौ महानन्दे सुहृदि मित्रे चन्द्रगुप्ते च विभक्तं यथातथमर्पितमित्यर्थः। शिखरिणीवृत्तं रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति लक्षणात्।

अगृहीते अनायत्तीकृते इत्यर्थः। निरतिशयः नास्ति अतिशयो यस्मात् सः अतिमहानित्यर्थः। नन्दान्वयावयवे नन्दवंशाङ्कुरे इत्यर्थः साचिव्यं मन्त्रित्वं तपोवनगतः वैरनिर्यातनासामर्थ्यात् जातवैराग्यतया वानप्रस्थधर्ममाश्रित इत्यर्थः। तपस्वी अक्षमत्वात् निरपराधः। मलयकेतुं मित्रपुत्र मितिशेषः अङ्गीकृत्य स्वराज्ये राजा भवतु इत्येवं स्वीकृत्य यावत् उपदर्शयत्येव अवश्य मुपदर्शयिष्यतीत्यर्थः यावच्छब्दयोगे भव्ये लट्।

ऐश्वर्यादिति। अयं लोकः सांसारिक लोक इत्यर्थः ऐश्वर्यात् अनपेतं अ... ऐश्वर्यसम्पन्नम् ... ईश्वरं प्रभुं अर्थतः ... सेवते। ये

भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन, निःसङ्गया
भक्त्या, कार्य्यधुरां वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः ॥ १४॥

अतएवास्माकं त्वत्संग्रहे प्रयत्नः, कथमसौ वृषलस्य साचिव्यग्रहणेन सानुग्रहः स्यादिति । कुतः

अप्राज्ञेन च, कातरेण च, गुणः स्यात् सानुरागेण कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत्, किं भक्तिहीनात् फलम् ।
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः, कलत्रमितरे, सम्पत्सु चापत्सु च ॥ १५ ॥

---

विपत्तिषु तं प्रभुम् अनुगच्छन्ति अनुकुर्वन्ति आत्मानं विपन्नमेव मन्यन्ते इत्यर्थः अथवा सेवन्ते विपदुद्धाराय यत्नातिशयं दर्शयन्तीत्यर्थः ते तत्-प्रतिष्ठाशया तस्य प्रभोः प्रतिष्ठा पुनरुत्थानं तत्र या आशा तया प्रभोः पुनरभ्युदये अस्माकमभीष्टलाभो भविष्यतीति प्रत्याशया इत्यर्थः तथा चरन्तीति शेषः । ये तु भर्तुः स्वामिनः प्रलये मरणेऽपि पूर्वसुकृता-सङ्गेन स्वामिकृतपूर्वोपकारबाध्यतया निःसङ्गया निर्लोभया स्वार्थ-शून्यया भक्त्या कार्य्यधुरां स्वामिनियुक्तकार्य्यभारं वहन्ति त्वादृशा भवद्विधास्ते कृतिनः कर्मिणः दुर्लभाः । शार्दूलविक्रीडितं वृत्तम् ।

(१५) अप्राज्ञेनेति । सानुरागेण अनुरागवता अप्राज्ञेन बुद्धिरहितेन कातरेण विक्रमशून्येन भृत्येन नृपतेः कः गुणः किं फलं स्यात् न कोऽपीत्यर्थः । बुद्धिविक्रमवतोऽपि भक्तिहीनात् अनुरागशून्यात् भृत्याद्वा नृपतेः किं फलं न किमपीत्यर्थः येषां प्रज्ञाविक्रमभक्तयः समुदिताः समस्ता एव गुणाः सन्तीति शेषः ते भृत्या नृपतेः सम्पत्सु आपत्सु च भूतये मङ्गलाय भवन्तीति शेषः इतरे प्रज्ञादिशून्याः भृत्याः नृपतेः कलत्रं स्त्री ऐश्वर्य्यलाभार्थमेव सेवनात् न वै पत्युः कामाय प्रियाः भवन्ति आत्मनस्तु कामायेति श्रुतेः । अत्रापि वृत्तं शार्दूलविक्रीडितम् ।

तन्मयाप्यस्मिन्वस्तुनि न शयानेन स्थीयते यथाशक्ति क्रियते तद्ग्रहणं प्रति यत्नः। कथमिति। अत्र तावद् वृषलपर्वतकयोरन्यतरविनाशेनापि, चाणक्यस्यापकृतं भवतीति, विषकन्यया राक्षसेनास्माकमत्यन्तोपकारी, मित्रं घातितस्तपस्वी पर्वतेश्वर इति सञ्चारितो जगति जनापवादः लोकप्रत्ययार्थमस्यैवार्थस्याभिव्यक्तये (ग)। पिता ते चाणक्येन घातित इति रहसि त्रासयित्वा, भागुरायणेनापवाहितः पर्वतकपुत्रो मलयकेतुः। शक्यः खल्वेष राक्षसमतिपरिगृहीतोऽपि व्युत्तिष्ठमानो बुद्ध्या निवारयितुम्। न पुनरस्य निग्रहात् पर्वतकवधोत्पन्नमयशः प्रकाशीभवत् प्रमार्ष्टुमलमिति। अन्यच्च नियुक्ताश्च मया स्वपरपक्षयोरनुरक्तापरक्तजनजिज्ञासया बहुविधदेशभाषावेशाचारसञ्चारवेदिनो नानाव्यञ्जनाः प्रणिधयः (घ)। अन्वि-

---

(ग) अस्मिन् वस्तुनि विषये शयानेन निद्रावता अनवहितेन इति यावत्। पर्वतो नाम कश्चित् राजा चाणक्यस्य मित्रमासीत्। तस्य स्वयं हननं कदापि न सम्भाव्यते तथात्वे च चन्द्रगुप्तस्य सहायहीनत्वं स्यादिति राक्षसेनैव असौ घातित इत्येवं साधारणजनविश्वासार्थं अस्यैव पर्वतकवधरूपस्यार्थस्य अभिव्यक्तये केन साधित इति प्रकाशनाय विषकन्यया विषदायिन्या कन्यया, सम्भोगलालसया यस्याः स्पर्शात् सविषसम्भक्षणेन तत्क्षणादेव यथा मृत्युर्भवेत्तथा सज्जितया इति भावः।

(घ) अपवाहितः अपसारितः स्थानान्तरं नीत इत्यर्थः। व्युत्तिष्ठमानः उद्यच्छमानः। निग्रहात् हननात्। प्रमार्ष्टुं निराकर्तुम्। अनुरक्ताः अनुरागिणः अपरक्ताः विरक्ताः तादृशानाम् उभयपक्षीय-

थन्ते च कुसुमपुरनिवासिनां नन्दामात्यसुहृदां निपुणतरं प्रचारगतयः । तत्तत्कारणमुत्पाद्य कृतकृत्यतामापादिताश्चन्द्रगुप्तसहोत्थायिनो भद्रभटप्रभृतयः प्रधानपुरुषाः (ङ) । अनुप्रयुक्तानाञ्च तीक्ष्णरसदायिनां प्रतिविधाने प्रत्यप्रमादिनः परीक्षितभक्तयः क्षितिपतिप्रत्यासन्नाः नियुक्तास्तत्राप्तपुरुषाः (च) । अस्ति चास्माकं सहाध्यायि मित्रं विष्णुशर्म्मा नाम ब्राह्मणः । स च औशनस्यां दण्डनीतौ, चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे च, परं प्रावीण्यमुपगतः । स च मया क्षपणकलिङ्गधारी, नन्दवधप्रतिज्ञानन्तरमेव कुसुमपुरमुपनीय, सर्वनन्दामात्यैः सह सख्यं ग्राहितो, विशेषतश्च तस्मिन् राक्षसः समुत्पन्नविस्रम्भः । तेनेदानीं महत्प्रयोजनमनुष्ठेयं भविष्यति । तदेवमस्मत्तो न किञ्चित् परिहास्यते । वृषल एव केवलं प्रधानप्रकृतिः अस्मासु आरोपितराज्यतन्त्रभारः

---

जनानां जिज्ञासया ज्ञानार्थमित्यर्थः । नानाव्यञ्जनाः नाना विविधं व्यञ्जनं चिह्नं येषां ते । प्रणिधयः गूढ़पुरुषाः ।

(ङ) प्रचारगतयः प्रचाराः कार्य्येषु प्रवृत्तयः गतयः अवस्थाविशेषाश्च । तत्तत्कारणमिति तत्तत्कारणं कृतकृत्यतालाभकारणम् उत्पाद्य घटयित्वा कृतकृत्यतां मनोरथसिद्धिम् आपादिताः प्रापिताः चन्द्रगुप्तसहोत्थायिनः चन्द्रगुप्तेन सह उत्थायिनः उत्तिष्ठमानाः अभ्युदयमाना इत्यर्थः एतेन ते प्रधानपुरुषाः स्वानुरक्ता एव तिष्ठन्ति न कदापि विरज्यन्ते इति भावः ।

(च) तीक्ष्णरसदायिनाम् । विषदायिनां अप्रमादिनः सावधानाः । क्षितिपतिप्रत्यासन्नाः राजपार्श्वचराः । आप्तपुरुषाः विश्वस्तजनाः ।

सततमुदास्ते। अथवा यत् स्वयमभियोगदुःखैरसाधारणै-रपाकृतं, (क) तदेव राज्यं सुखयति। कुतः

स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः।
गजेन्द्राश्च नरेन्द्राश्च, प्रायः सीदन्ति दुःखिताः॥ १६॥

ततः प्रविशति सह यमपटेन चरः।

पणमह जमस्स चलणे, किं कज्जं देवेहिं असेहिम्।
एसो क्खु, अस्सभत्ताणं हरइ जीअं धड़फड़न्तम् (१)॥१७॥

अविअ

पुरिसस्स जीविदव्वं बिसमादो होइ भत्तिगहिआदो।
मारेइ सव्वलोअं जो, तेण जमेण जीआमो (२) ॥१८॥

---

(१) प्रणमत यमस्य चरणं, किं कार्यं देवैरन्यैः।
एष खल्वन्यभक्तानां हरति जीवितं परिस्फुरन्तम्॥

(२) अपिच, पुरुषस्य जीवितव्यं विषमादपि भवति भक्तिगृहीतात्।
मारयति सर्वलोकं यस्तेन यमेन जीवामः॥

---

(क) औशनसदण्डनीतौ उशनसा शुक्रेण कृता औशनसा या दण्डनीतिः शासनशास्त्रं तस्यां प्रावीण्यं नैपुण्यम्। क्षपणकलिङ्ग-धारी नग्नसन्न्यासिचिह्नधारी। समुत्पन्नविस्रम्भः सञ्जातविश्वासः। परि-हास्यते परिहीनं भविष्यति। उदास्ते उदासीनः सन् तिष्ठति। अभियोगदुःखैः कार्याभिनिवेशजनितैः दुःखैः अपाकृतं-रहितम्।

(१६) स्वयमाहरणे क्लेशं दर्शयन्नाह स्वयमिति। सीदन्ति कष्ट-माप्नुवन्तीत्यर्थः। अनुष्टुब्वृत्तम्।

(१८) भक्तिगृहीतात् भक्त्या गृहीतात् आयत्तीकृतात् विषमात् भयङ्करादपि जनादित्यर्थः। तेन यमेन तदनुग्रहेण इति भावः।

ता एदं गेहं पविसिअ, जमपडं दंसअंतो गाएमि (३)। इति परिक्रामति।

शिष्यः। विलोक्य। भद्र! न प्रवेष्टव्यम्।

चरः। हंहो बम्ह(ह्म)णा! कस्स एदं गेहम्? (४)।

शिष्यः। अस्माकमुपाध्यायस्य सुगृहीतनाम्न (ज) आर्य्य-चाणक्यस्य।

चरः। विहस्य। हंहो बम्ह(ह्म)णा! अत्तणोज्जेव पेर-अस्स एदं धम्मभादुअस्स घरं होदि, ता देहि मे पवेसं, जाव दे उवज्झाअस्स धम्मं उवदिसामि (५)।

शिष्यः। सक्रोधम्। धिक् मूर्ख! किं भवानस्मदुपाध्याया-दपि धर्मवित्तमः? (झ)

चरः। हंहो बम्ह(ह्म)णा! मा कुप्प, णहि क्खु सव्वो सव्वं जाणादि, ता किम्पि ते उवज्झाओ जाणादि, किम्पि अम्हा(ह्मा)रिसा जाणन्ति (६)।

---

(३) तस्मादिदं गृहं प्रविश्य, यमपटं दर्शयन् गायामि।

(४) अहो ब्राह्मण! कस्येदं गृहम्?

(५) अहो ब्राह्मण! आत्मीयस्यैव प्रेरकस्य एतत् धर्मभ्रातुर्गृहम्, तस्माद्देहि मे प्रवेशं यावत् तवोपाध्यायस्य धर्ममुपदिशामि।

(६) अहो ब्राह्मण! मा कुप्य, न हि खलु सर्वः सर्वं जानाति, तत्किञ्चित् ते उपाध्यायो जानाति, किञ्चित् अस्मादृशा अपि जानन्ति।

---

(ज) सुगृहीतनाम्नः यन्नाम्नि कृते शुभं स्यात् स सुगृहीतनामा तस्य। तथाचोक्तं "स सुगृहीतनामा स्यात् यः प्रातः स्मर्यते जनैः" इति।

(झ) धर्मवित्तमः समधिकधर्मज्ञः।

शिष्यः । सक्रोधम् । मूर्ख ! सर्वज्ञतामुपाध्यायस्य [चोरयितुमिच्छसि] चोरयसि ।

चारः । हंहो बम्म(ह्म)णा ! जइ दे उवज्झाओ सव्वं जाणादि, जाणादु दाव कस्स चन्दो अणभिमदो त्ति (७) ।

शिष्यः । मूर्ख ! किमनेन ज्ञातेन गुरोर्भविष्यति ?

चरः । हंहो बम्म(ह्म)णा ! तुम्ह उवज्झाओ ज्जेव जाणिस्सदि जं इमिणा जाणिदेण भोदि, उजुअबुद्धिआ तुमं दाव इत्तियं जाणासि, कमलाणं चन्दो अणभिमदो त्ति । एं पेक्ख,

कमलाणं मणोहराणं वि रूआदो विसंवअइ सीलम् ।
संपुण्णमण्डलम्मि जाइं चन्दे विरुद्धाइं (८) ॥ १९ ॥

चाण । आकर्ण्यात्मगतम् । अये चन्द्रगुप्तादपरक्तान् पुरुषान् जानामीत्युपक्षिप्तमनेन (ञ) ।

शिष्यः । मूर्ख ! किमिदमसंबद्धमेवमभिधीयते (ट) ।

---

(७) अहो ब्राह्मण ! यदि तवोपाध्यायः सर्वं जानाति, जानातु तावत् कस्य चन्द्रोऽनभिमत इति ?

(८) अहो ब्राह्मण ! तवोपाध्याय एव ज्ञास्यति यदेतेन ज्ञातेन भवति, ऋजुबुद्धिस्त्वं तावदेतावत् जानासि, कमलानां चन्द्रोऽनभिमत इति । ननु पश्य,

कमलानां मनोहराणामपि रूपाद्विसंवदति शीलम् ।
सम्पूर्णमण्डलेऽपि यानि चन्द्रे विरुद्धानि ॥

---

(ञ) उपक्षिप्तं कथितम् ।

(ट) असम्बद्धम् असङ्गतं पूर्वापरसम्बन्धरहितमित्यर्थः ।

चरः । हंहो बम्म(ह्म)णा ! सुसंवद्धं ज्जेव एदं भवे (९) ।

शिष्यः । यदि किं स्यात् ?

चरः । जइ सुणन्तं जाणन्तं अ जणं लहे (१०) ।

चाण । विलोक्य । भद्र ! सुखं प्रविश, लप्स्यसे [श्रोतारं ज्ञातारञ्च] । [श्रोतुं जानन्तम्]

चरः । एसो प्पविसामि । प्रविश्योपसृत्य । जेदु, जेदु, अज्जो (११) ।

चाण । विलोक्यात्मगतम् । कथं प्रभूतत्वात् (ठ) कार्य्याणां, कस्य परिज्ञाने नियुक्तो निपुणक इति न ज्ञायते । आः ज्ञातम्, अयें कथमयं प्रकृतिचित्तपरिज्ञाने नियुक्तो निपुणकः । प्रकाशम् । भद्र ! स्वागतमुपविश्यताम् ।

चरः । जं अज्जो आणवेदि त्ति (१२) । भूमावुपविशति ।

चाण । भद्र ! उपवर्णयेदानीं स्वनियोगवृत्तान्तम् । अपि वृषलमनुरक्ताः प्रकृतयः ? (ड)

---

(९) अहो ब्राह्मण ! सुसम्बद्धमेवैतद् भवेत् ।

(१०) यदि शृण्वन्तं जानन्तञ्च जनं लभे । ( शृण्वितुं जानन्तुं ) इति पाठे श्रोतुं जानन्तम् ।

(११) एष प्रविशामि । जयतु जयतु आर्य्यः ।

(१२) यदेव आज्ञापयतीति ।

---

(ठ) प्रभूतत्वात् बाहुल्यात् ।

(ड) प्रकृतयः प्रधानपुरुषाः "प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे" इत्यमरः ।

चरः । अध इं ? अज्जेण क्खु तेसु तेसु विराअकारणेसु परिहरिदेसु सुगहीदणामधेए देए चन्दउत्ते दिढ़ं अणुरत्ताओ पक्किदिओ। किं उण सन्ति एत्थ णअरे अमच्चरक्खसेण सह पढ़मं समुप्पसिणेहबहुमाणा तिण्णि पुरिसा, जे देअस्स चन्दसिरिणो सिरिं ण सहन्ति (१३)।

चाण । सक्रोधम् । ननु वक्तव्यं स्वजीवितं न सहन्त इति । भद्र ! अपि ज्ञायन्ते नामधेयतः ?

चरः । कधं असुणिदणामधेया अज्जस्स णिवेदीअन्ति (१४) ।

चाण । तेन हि श्रोतुमिच्छामि ।

चरः । सुणादु अज्जो, पढ़मं दाव अज्जस्स रिपुवक्खे बद्धपक्खवादो क्खवणओ (१५) ।

चाण । सहर्षमात्मगतम् । अस्मद्रिपुपक्षे बद्धपक्षपातः (ढ) क्षपणकः । प्रकाशम् । किं नामधेयो हि सः ?

चरः । जीवसिद्धी णाम ।

---

(१३) अथ किम् ? आर्येण खलु तेषु तेषु विरागकारणेषु परिहृतेषु सुगृहीतनामधेये देवे चन्द्रगुप्ते दृढमनुरक्ताः प्रकृतयः किं पुनः सन्त्यत्र नगरे अमात्यराक्षसेन सह प्रथमं समुत्पन्नस्नेहबहुमानास्त्रयः पुरुषाः, ये देवस्य चन्द्रश्रियः श्रियं न सहन्ते ।

(१४) कथमश्रुतनामधेया आर्यस्य निवेद्यन्ते ।

(१५) शृणोत्वार्यः ; प्रथमं तावद्रिपुपक्षे बद्धपक्षपातः क्षपणकः ।

---

(ढ) बद्धपक्षपातः बद्धस्नेहः ।

चाण। अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणक इति कथमवगतं भवता ?

चरः। जेण सा अमच्चरक्खसेण पउत्ता विसकण्णआ देए पव्वदेस्सरे समावेसिदा (१६)।

चाण। स्वगतम्। जीवसिद्धिरेष तावदस्मत्प्रणिधिः। प्रकाशम्। भद्र! अथापरः कः?

चरः। अज्ज अवरो क्खु अमच्चरक्खसस्स प्पिअवअस्सो काअत्थो सअडदासो णाम (१७)।

चाण। विहस्यात्मगतम्। कायस्थ इति लघ्वी मात्रा (ण)। तथापि न युक्तं प्राकृतमपि रिपुमवज्ञातुम्। तस्मिन्मया सुहृच्छद्मना सिद्धार्थको निक्षिप्तः। प्रकाशम्। भद्र! तृतीयं श्रोतुमिच्छामि।

चरः। विहस्य। तइओ वि अमच्चरक्खसस्स दुदीअं विअ हिअअं, पुप्फउरवासी, मणिआरसेट्ठी चन्दणदासो णाम,

---

(१६) येन सा अमात्यराक्षसप्रयुक्ता विषकन्या देवे पर्वतेश्वरे समावेशिता।

(१७) आर्य्य! अपरः खलु अमात्यराक्षसस्य प्रियवयस्यः कायस्थः शकटदासो नाम।

---

(ण) लघ्वी मात्रा क्षुद्रः अंशः हीनजातित्वात् हीनबुद्धिरयं हीनबुद्धिना कियती अपकृतिः साध्यते इत्यवज्ञासूचकमिदमिति भावः।

जस्स गेहे कलत्तं णासीकदुअ अमच्चरक्खसो णअरादो अवक्कन्तो (१८)।

चाण। आत्मगतम्। नूनं सुहृत्तमः न हि अनात्मसदृशेषु राक्षसः कलत्रं न्यासीकरिष्यति। प्रकाशम्। भद्र! चन्दनदासस्य गृहे राक्षसेन कलत्रं न्यासीकृतमिति कथमवगम्यते भवता?

चरः। अज्ज! इअं अंगुलीअमुद्दा [अज्जं अवगमइस्सदि] अज्जं अवगदत्थं करिस्सदि (१९) इति मुद्रामर्पयति।

चाण। मुद्रामवलोक्य गृहीत्वा, वाचयति नाम राक्षसस्य। सहर्षं स्वगतम्। ननु राक्षस एवास्मदङ्गुलिप्रणयी संवृत्त (त) इति। प्रकाशम्। भद्र, अङ्गुलिमुद्राधिगमं प्रकाशेन श्रोतुमिच्छामि।

चरः। सुणादु अज्जो, अत्थि दाव अहं अज्जेण पउरजणचरिदंसणे णिउत्तो, तदो परघरप्पवेसे परस्स अणासंकणीयेण, इमिणा जमपडेण आहिण्डन्तो (थ) मणिआर-

(१८) तृतीयोऽपि अमात्यराक्षसस्य द्वितीयमिव हृदयं, पुष्पपुरनिवासी, मणिकारश्रेष्ठी, चन्दनदासो नाम, यस्य गेहे कलत्रं न्यासीकृत्य अमात्यराक्षसो नगरादपक्रान्तः।

(१९) आर्य! इयमङ्गुलिमुद्रा आर्यमवगतार्थं करिष्यति। (अज्जं अवगमइस्सदि) इति पाठे आर्यमवगमयिष्यति।

(त) अङ्गुलिप्रणयी संवृत्त इति अङ्गुलिप्रणयी हस्तगत इति यावत्।
(थ) आहिण्डमानः भ्रमन्नित्यर्थः।

सेट्ठिणो चन्दणदासस्स घरं पविट्ठोह्मि, तहिं जमपडअं पसारिअ पउत्तोह्मि गीदाइं गाइदुं (२०)।

चाण। ततस्ततः ?

चरः। तदो, एक्कादो आवरकादो (द) पञ्चवरिसदेसीओ पिअदंसणीअसरीराकिदी कुमारओ, बालजणसुलह-कोदुहलोप्फुल्लणअणजुअलओ णिक्कमिदुं पउत्तो, तदो हा णिग्गदो, हा णिग्गदोत्ति, संकापरिग्गहणिअदगुरुओ तस्स ज्जेव आवरकस्स अब्भंतरे उत्थिदो महन्तो कल-अलो। तदो ईसि दुआरदेसदाविदमुहीए एक्काए इत्थिआए, सो कुमारओ णिक्कमन्तो ज्जेव णिब्भच्छिअ अव-लम्बिदो कोमलाए बाहुलदाए, तस्साअ कुमारसंरोहसंभम-प्पचलिदंगुलिदो करादो पुरिसंगुलिपरिणाहप्पमाणघ-डिआ (ध) णिअलिदा इअं अंगुलीमुद्दिआ देहलीबन्धम्मि णिपडिआ, ताए इत्थिआए अणवबुद्धन्त ज्जेव, मम चल-

(२०) छायोत्वार्थः, अस्ति तावदहमार्येण पौरजनचरित्र-दर्शने नियुक्तः, ततः परगृहप्रवेशे परज्ञानाशङ्कनीयेन अनेन यमपटेन आहिण्डमानो, मणिकारश्रेष्ठिचन्दनदासस्य गृहं प्रविष्टोऽस्मि ; तत्र यमपटं प्रसार्य प्रवृत्तोऽस्मि गीतानि गातुम्।

(द) आवरकात् आवरणतः जवनिकाया इत्यर्थः।

(ध) पुरुषाङ्गुलिपरिणाहप्रमाणघटिता पुरुषस्य अङ्गुलेर्यः परि-णाहः विस्तारः तस्य प्रमाणेन परिमाणेन घटिता निर्मिता।

णपासं समागच्छिअ, पणामणिहुआ णववहुव्व णिच्चला संवुत्ता, मए वि अमच्चरक्खसस्स णामंकिदेति अज्जस्स पाद-मूलं पाविदा, ता एसो इमाए मुद्दाए आगमो त्ति (२१)।

चाण। भद्र! श्रुतं, अपसर नचिरादस्य परिश्रमस्यानु-रूपं फलमधिगमिष्यसि।

चरः। जं अज्जो आणवेदि त्ति (२२)। निष्क्रान्तः।

चाण। शार्ङ्गरव! शार्ङ्गरव!

प्रविश्य। शिष्यः। उपाध्याय! आज्ञापय।

चाण। वत्स! मसी [भाजनं] पात्रं पत्रञ्चोपानय।

शिष्यः। यदाज्ञापयत्युपाध्यायः। इति निष्क्रम्य पुनः प्रविश्य। उपाध्याय! इदं मसी [भाजनं] पात्रं पत्रञ्च।

---

(२१) ततश्च एकस्मादावरकात् पञ्चवर्षदेशीयः प्रियदर्शनीयशरीरा-कृतिः कुमारो, बालजनसुलभकौतुकोत्फुल्लनयनयुगलो निष्क्रमितु प्रवृत्तः; ततो, हा निर्गतो हा निर्गत इति (शङ्कापडिग्गहं णिवेदन्त इति पाठे शङ्कापरिग्रहं निवेदयन् इति स०) शङ्कापरिग्रहनिभृतगुरुकस्त-स्यैवावरकस्याभ्यन्तरे स्त्रीजनस्योत्थितो महान् कलकलः। तत ईषद्द्वार-देशदापित(दत्त)मुख्या एकया स्त्रिया स कुमारको निष्क्रामन्नेव निर्भर्त्स्यावलम्बितः कोमलया बाहुलतया। तस्याश्च कुमारसंरोध-संभ्रमप्रचलिताङ्गुलेः करात् पुरुषाङ्गुलिपरिणाहप्रमाणघटिता विगलिते-यमङ्गुलिमुद्रिका देहलीबन्धे निपतिता; तया च स्त्रिया अनवबुध्य-मानैव, मम चरणपार्श्वं समागत्य प्रणामनिभृता नववधूरिव निश्चला संवृत्ता; मयापि अमात्यराक्षसस्य नामाङ्कितेति आर्यस्य पादमूलं प्रापिता, तस्मादेषोऽस्या मुद्राया आगम इति।

(२२) यदार्य आज्ञापयति।

चाण । गृहीत्वा स्वगतम् । किमत्राभिलिखामि । अनेन खलु लेखेन राक्षसो जेतव्यः ।

प्रविश्य प्रतीहारी । जेदु, जेदु, अज्जो (२३) ।

चाण । सहर्षमात्मगतम् । गृहीतोऽयं जयशब्दः । प्रकाशम् । शोणोत्तरे ! किमागमनप्रयोजनम् ?

प्रती । अज्ज ! कमलमुउलाआरमञ्जलिं सीसे णिवेसिअ देओ चन्दसिरी अज्जं विण्णवेदि । इच्छामि अहं, अज्जेण अब्भणुण्णादो, देअस्स पव्वदेसरस्स पारलोइअं कादुं, तेण अ धारिदपुव्वाइं आभरणाइं गुणवन्ताणं बह्म(म्ह)णाणं पडिवादेमि त्ति (२४) ।

चाण । सहर्षमात्मगतम् । साधु वृषल ! साधु, ममैव हृदयेन सह सम्मन्त्र्य सन्दिष्टवानसि । प्रकाशम् । शोणोत्तरे ! उच्यतामस्मद्वचनाद् वृषलः, साधु वत्स ! साधु, अभिज्ञः खल्वसि लोकव्यवहाराणां, तदनुष्ठीयतामात्मनोऽभिप्रायः, किन्तु पर्व्वतेश्वरधृतपूर्व्वाणि भूषणानि गुणवन्ति गुणवद्भ्य एव ब्राह्मणेभ्यः प्रतिपादनीयानि, तदेषोऽहं स्वयं परीक्षितगुणान् ब्राह्मणान् प्रेषयामि ।

---

(२३) जयतु, जयत्वार्य्यः ।

(२४) आर्य्य ! कमलमुकुलाकारमञ्जलिं शीर्षे निवेश्य देवचन्द्रश्रीरार्य्यं विज्ञापयति । इच्छाम्यहमार्य्येणाभ्यनुज्ञातो, देवस्य पर्वतेश्वरस्य पारलौकिकं कर्तुम्, तेन च धारितपूर्वाणि आभरणानि गुणवतां ब्राह्मणानां प्रतिपादयामीति ।

प्रति। जं अज्जो आणवेदि त्ति (२५)। निष्क्रान्ता।

चाण। शार्ङ्गरव! शार्ङ्गरव! उच्यतामस्मद्वचना-द्विश्वावसुप्रभृतयस्त्रयो भ्रातरः, यथा वृषलात् प्रतिगृह्याभरणानि भवद्भिरहं द्रष्टव्य इति।

शिष्यः। यदाज्ञापयत्युपाध्याय इति। निष्क्रान्तः।

चाण। स्वगतम्। उत्तरोऽयं (न) लेखार्थः, पूर्व्वः कतमोऽस्तु। विचिन्त्य। आः ज्ञातः, उपलब्धवानस्मि प्रणिधिभ्यो, यथा तस्य म्लेच्छराजबलस्य मध्यात् प्रधानतमाः पञ्च राजानः परया भक्त्या राक्षसमनुवर्त्तन्ते। तद्यथा,

कौलूतश्चित्रवर्मा, मलयनरपतिः सिंहनादो नृसिंहः,
काश्मीरः पुष्कराक्षः, क्षतरिपुमहिमा सैन्धवः सिन्धुषेणः।
मेघाक्षः पञ्चमोऽस्मिन् पृथुतुरगबलः पारसीकाधिराजो,
नामान्येषां लिखामि ध्रुवमहमधुना चित्रगुप्तः प्रमार्ष्टु ॥२०॥

---

(२५) यत् आर्य्य आज्ञापयतीति।

---

(न) उत्तरोऽयमिति उत्तरः शेषांश इत्यर्थः।

(२०) कौलूत इति। कुलूतदेशपतिः चित्रवर्म्मा नाम, नृसिंहः नरश्रेष्ठः मलयाधिपतिः सिंहनादो नाम, काश्मीरदेशाधिराजः पुष्कराक्षो नाम, क्षतरिपुमहिमा शत्रुन्दमः सिन्धुदेशाधिपतिः सिन्धुषेणो नाम, पृथुतुरगबलः प्रभूताश्वसादिबलः पारसीकदेशपतिः मेघाक्षो नाम, एते पूर्वोक्ताः पञ्च राजानः। अहमेषां नामानि खल भेदपत्रे लिखामि, अधुना चित्रगुप्तः यमः तत्सचिवो वा ध्रुवं निश्चितं प्रमार्ष्टु शोधयतु त्यजतु इति यावत्, अहमेव तेषां शासिता भविष्यामि. चित्रगुप्तप्रयासोऽत्र विफल इति भावः। अत्रापि स्रग्धराछन्दः।

विचिन्त्य। अथवा न लिखामि, सर्व्वमनभिव्यक्तमेव तावदास्ताम्। प्रकाशम्। शार्ङ्गरव! शार्ङ्गरव!

प्रविश्य शिष्यः। उपाध्याय! आज्ञापय।

चाण। वत्स! श्रोत्रियाक्षराणि प्रयत्नेन लिखितान्यपि नियतमस्फुटानि भवन्ति, तदुच्यतामस्मद्वचनात् सिद्धार्थकः। कर्णे कथयित्वा। एभिरक्षरैः केनापि, किमपि, कस्यापि, स्वयं वाच्यमिति; अदत्तवाह्यनामानं लेखं शकटदासेन लेखयित्वा, मामुपतिष्ठस्व, न चाख्येयमस्मै (प) चाणक्यो लेखयतीति।

शिष्यः। यदाज्ञापयत्युपाध्याय इति। निष्क्रान्तः।

चाण। स्वगतम्। हन्त जितो मलयकेतुः।

प्रविश्य लेखहस्तः सिद्धार्थकः। जअदु, जअदु, अज्जो। अज्ज! अअं सो सअडदासेण सहत्थलिहिदो लेहो। [मम वअणेण अविचालिअ] (२६)।

चाण। गृहीत्वा निरीक्ष्य। अहो दर्शनीयताक्षराणाम्। इत्यनुवाच्य। भद्र! अनया मुद्रया मुद्रयैनम्।

सिद्धा। जं अज्जो आणवेदि त्ति। तथा कृत्वा। अज्ज!

---

(२६) जयतु जयत्वार्य्यः। आर्य्य! अयं सः शकटदासेन स्वहस्तलिखितो लेखः। [मम वचनेन अविचाल्य] इत्यधिकपाठे मम वचनेनाविचार्य्य।

---

(प) न चाख्येयमिति आख्येयं वाच्यम्।

अअं सो सुहिदो लेहो, ता आणवेदु अज्जो किं अवरं अणु-चिट्ठीअदु त्ति (२७)।

चाण। भद्र! कस्मिंश्चिदात्मनानुष्ठेये कर्मणि त्वां व्यापारयितुमिच्छामि (फ)।

सिद्धा। सहर्षम्। अज्ज! अणुग्गहिदोह्मि, ता आणवेदु अज्जो, किं इमिणा दासजणेण अज्जस्स अणुचिट्ठि-दव्वं (२८)।

चाण। भद्र! प्रथमं तावद् वध्यस्थानं गत्वा, घातकाः सरोषं दक्षिणाक्षिसङ्कोचसंज्ञां ग्राहितव्यास्ततस्तेषु गृहीत-संज्ञेषु भयापदेशादितस्ततः प्रद्रुतेषु (ब) शकटदासो वध्य-स्थानादपनीय, राक्षसं प्रापयितव्यः, तस्माच्च सुहृत्प्राण-रक्षणपरितुष्टात् पारितोषिकं ग्राह्यं, राक्षस एव कञ्चित् कालं सेवितव्यः, ततः प्रत्यासन्नेषु परेषु त्वया प्रयोजन-मिदमनुष्ठेयम्। कर्णे एवमेवम्।

सिद्धा। जं अज्जो आणवेदि त्ति (२९)।

---

(२७) अत् आर्य्य आज्ञापयति। आर्थायं स सुहितो लेखः, तस्मा-दाज्ञापयत्वार्य्यः, किमपरमनुष्ठीयतामिति।

(२८) आर्य्य! अनुगृहीतोऽस्मि, तदाज्ञापयत्वार्य्यः, किमनेन दास-जनेनार्य्यस्यानुष्ठातव्यम्।

(२९) यदार्य्य आज्ञापयतीति।

---

(फ) व्यापारयितुं नियोक्तुम्।

(ब) दक्षिणाक्षिसङ्कोचसंज्ञां दक्षिणनेत्रसङ्कोचसङ्केतम्। भयाप-देशात् भयच्छलात्। प्रद्रुतेषु पलायितेषु।

चाण । शार्ङ्गरव ! शार्ङ्गरव !

प्रविश्य शिष्यः । उपाध्याय ! आज्ञापय ।

चाण । उच्यतां मद्वचनात् कालपाशिको, दण्डपाशिकश्च, यथा वृषलः समाज्ञापयति, य एष क्षपणको जीवसिद्धिर्नाम, राक्षसप्रयुक्तो विषकन्यया पर्व्वतेश्वरं घातितवान् स एनमेव दोषं प्रख्याप्य, सनिकारं नगरान्निर्वास्यतामिति ।

शिष्यः । यदाज्ञापयत्युपाध्यायः । इति परिक्रामति ।

चाण । वत्स ! तिष्ठ तिष्ठ, योऽयमपरः कायस्थः शकटदासो नाम, राक्षसप्रयुक्तो, नित्यमस्मच्छरीरमभिद्रोग्धुमिह प्रयतते, स चाप्येनं दोषं प्रख्याप्य, शूलमारोप्यतां गृहजनश्चास्य बन्धनागारे प्रवेश्यतामिति ।

शिष्यः । यदाज्ञापयत्युपाध्याय इति । निष्क्रान्तः ।

चाण । चिन्तां नाटयित्वा स्वगतम् । अपि नाम दुरात्मा राक्षसो गृह्येत ? ।

सिद्ध । अज्ज ! गहीदो (३०) ।

चाण । सहर्षमात्मगतम् । हन्त गृहीतो राक्षसः । प्रकाशम् । भद्र ! कोऽयं गृहीतः ?

सिद्ध । गहीदो मए अज्जस्स सन्देसो, ता गमिस्सं अहं कज्जसिद्धीए (३१) ।

---

(३०) आर्य्य ! गृहीतः ।

(३१) गृहीतो मया, आर्य्यस्य सन्देशः,तस्माद्गमिष्याम्यहं कार्य्यसिद्ध्यै ।

चाण । साङ्गुलिमुद्रं लेखमर्पयित्वा । भद्र ! सिद्धार्थक ! गम्यताम्, अस्तु ते कार्य्यसिद्धिः ।

सिद्धा । जं अज्जो आणवेदि त्ति (३२)। प्रणम्य निष्क्रान्तः ।

प्रविश्य शिष्यः । उपाध्याय ! कालपाशिको, दण्डपाशिकश्च उपाध्यायं विज्ञापयतः । इदमनुष्ठीयते देवस्य चन्द्रगुप्तस्य शासनमिति ।

चाण । शोभनम् । वत्स ! मणिकारश्रेष्ठिनं चन्दनदासमिदानीं द्रष्टुमिच्छामि ।

शिष्यः । यदाज्ञापयत्युपाध्याय इति । निष्क्रम्य चन्दनदासेन सह पुनः प्रविश्य । इत इतः, श्रेष्ठिन् !

चन्दनदासः । स्वगतम् । चाणक्कम्मि अकरुणे, सहसा सद्दाविदस्स लोअस्स बड्डई णिद्दोसस्सवि सङ्का, किं उण मम जातदोसस्स ? ता भणिदा मए धनसेणप्पमुहा तिण्णि वाणिजिआ जधा कदाइ चाणक्कहदओ गेहं मे विचिणावेदि, ता अवहिदा णिव्वहध (भ) भट्टिणो अमच्चरक्खसस्स घरअणं, मह दाव जं होदि, तं होदु त्ति (३३)।

---

(३२) यदार्य्य आज्ञापयतीति ।

(३३) चाणक्ये अकरुणे, सहसा शब्दायितस्य लोकस्य निर्दोषस्यापि वर्द्धते शङ्का, किं पुनर्मम जातदोषस्य ? तस्माद्भणिता मया धनसेनप्रमुखास्त्रयो वाणिजिकाः, यथा कदापि चाणक्यहतको गेहं मे विचि-

---

(भ) शब्दायितस्य आहूतस्य । निर्वहत निष्कामयत स्थानान्तरं प्रापयत इत्यर्थः ।

शिष्यः। भोः श्रेष्ठिन्! इत इतः।

चन्द। अअमागदोह्मि (३४)। उभौ परिक्रामतः।

शिष्यः। उपाध्याय! अयं श्रेष्ठी चन्दनदासः।

चन्द। उपसृत्य। जअदु जअदु अज्जो (३५)।

चाण। नाट्येनावलोक्य। भोः श्रेष्ठिन्! स्वागतमिदमासनमास्यताम्।

चन्द। प्रणम्य। किं ण जाणादि अज्जो, जहा अणुचिदो उवआरो (म) [सहिअअस्स] परिहवादोवि महन्तं दुःखमुप्पादेदि, ता इह ज्जेव अहं उचिदाए भूमीए उवविसामि (३६)।

चाण। भोः श्रेष्ठिन्! मा मैवं, उचितमेवैतदस्मद्विधैः सह भवतः, तदुपविश्यतामासन एव।

चन्द। स्वगतम्। उपलक्खिदमणेण किम्पि। प्रकाशम्। जं अज्जो आणवेदि त्ति (३७)। उपविष्टः।

---

नोति तस्मादवहिता निर्वहत भर्तुरमात्यराक्षसस्य गेहजनं, मम तावत् यद्भवति तद्भवतु।

(३४) अयमागतोऽस्मि।

(३५) जयतु जयत्वार्य्यः।

(३६) किं न जानात्यार्य्यः, यथानुचित उपचारः, [सहृदयस्य] इत्यधिकपाठे सहृदयस्य।-परिभवादपि महद्दुःखमुत्पादयति, तस्मादिहैवोचितायां भूमावुपविशामि।

(३७) उपलक्षितमनेन किमपि। यदार्य्य आज्ञापयतीति।

---

(म) उपचारः अभ्यर्थनादिरूप आदरः।

चाण। भोः श्रेष्ठिन्! चन्दनदास! अपि प्रचीयन्ते (य) संव्यवहाराणां लाभा वः?

चन्द। अज्ज! अध इं? अज्जस्स पसाएण अखण्डिदा मे वाणिज्जा (३८)।

चाण। भोः श्रेष्ठिन्! अपि कदाचित् चन्द्रगुप्तदोषा अतिक्रान्तपार्थिवगुणान् अधुना स्मारयन्ति प्रकृतीः?

चन्द। कर्णौ पिधाय। सन्तं पावं (र)। सरअणिसासमुग्गमेण विअ पुण्णिमाचन्देण, चन्दसिरिणा अधिअं णन्दन्ति पअदीओ (३९)।

चाण। भोः श्रेष्ठिन्! यद्येवं प्रीताभ्यः प्रकृतिभ्यः प्रियमिच्छन्ति राजानः।

चन्द। आणवेदु अज्जो। किं, कित्तिअं वा अत्थजादं इमादो जणादो इच्छीअदि त्ति (४०)।

चाण। भोः श्रेष्ठिन्! चन्द्रगुप्तराज्यमिदं, न नन्दराज्यं,

---

(३८) आर्य्य! अथ किम्? आर्य्यस्य प्रसादेन अखण्डिता मे वाणिज्या।

(३९) शान्तं पापं, शारदनिशासमुद्गमेन पूर्णिमाचन्द्रेण, चन्द्रश्रियाधिकं नन्दन्ति प्रकृतयः।

(४०) आज्ञापयतु आर्य्यः। किं कियद्वा अर्थजातमस्माज्जनादिष्यत इति।

---

(य) प्रचीयन्ते वर्द्धन्ते।

(र) शान्तं पापं "शान्तं पापमनिर्द्देश्ये" इति वचनात् अत्राप्यार्थे शान्तं पापमिति प्रयुज्यते नाह्ये। न वाच्यमित्यर्थः।

यतो नन्दस्यैवार्थरुचेरर्थसम्बन्धः प्रीतिमुत्पादयति, चन्द्र-गुप्तस्य तु भवतामपरिक्लेश एव ।

चन्द । सहवम् । अज्ज ! अणुग्गहिदोह्मि ।

चाण । भोः श्रेष्ठिन् ! स चापरिक्लेशः कथमाविर्भवतीति न पुनः प्रष्टव्याः स्मो भवता * ।

चन्द । आणवेदु अज्जो (४१) ।

चाण । संक्षेपतो राजनि अविरुद्धाभिर्वृत्तिभिः (ल) [वर्त्तितव्यम्] ।

चन्द । अज्ज ! को उण अधण्णो, [जो राअविरुद्धो त्ति] अज्जेण अवगच्छीअदि ? (४२) ।

चाण । भवानेव तावत् प्रथमः ।

चन्द । कर्णौ पिधाय । सन्तं पावं, सन्तं पावं, कीदिसो तिणाणं अग्गिणा सह विरोहो (४३) ?

चाण । अयमीदृशो विरोधो, यत्त्वमद्यापि राजापथ्य-

(४१) आज्ञापयत्वार्यः ।

(४२) आर्य ! कः पुनरधन्य आर्येणावगम्यते ? [जो राअ-विरुद्धो त्ति] इति पाठे यो राजविरुद्धः । [राअ] इत्यत्र [राइणि] [राइणा] च क्वचित् पाठः, राज्ञि, राज्ञा वा ।

(४३) शान्तं पापं शान्तं पापं, कीदृशस्तृणानामग्निना सह विरोधः ?

* तथाच प्रकृतीनाम् अपरिक्लेशव्यञ्जकः को हेतुरिति भवता मां प्रति प्रष्टव्यमेवेत्यर्थः ।

(ल) संक्षेपत इति संक्षेपतः सामान्यतः । वृत्तिभिर्व्यवहारैः । [वर्त्तितव्यम्] इत्यधिकपाठः ।

कारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहमभिनीय रक्षसि।

चन्द। अज्ज ! अलीअं एदं, केणावि अणज्जेण अज्जस्स णिवेदिदं (४४)।

चाण। भोः श्रेष्ठिन् ! अलमाशङ्कया, भीताः पूर्वराजपुरुषाः पौराणामनिच्छतामपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति, ततस्तत्प्रच्छादनमेव (व) दोषमुत्पादयति।

चन्द। एवखेदं। तस्सिं समये आसी अह्म(म्ह)घरे अमच्चरक्खसस्स घरअणो (४५)।

चाण। प्रथममनृतमिदानीमासीदिति, परस्परविरोधिनी वचने।

चन्द। एत्तिअं ज्जेव अत्थि मे वाआच्छलं (४६)।

चाण। भोः श्रेष्ठिन् ! चन्द्रगुप्ते राजनि न परिग्रहः छलानां, तत् समर्पय राक्षसस्य गृहजनमच्छलं भवतु भवतः।

चन्द। अज्ज ! णं विसवेमि, तस्सिं समये आसी अह्म(म्ह)घरे अमच्चरक्खसस्स घरअणो त्ति (४७)।

---

(४४) आर्य ! अलीकमेतत्, केनाप्यनार्येण आर्यस्य निवेदितम्।

(४५) एवं नु इदम्। तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजनः।

(४६) एतावदेवास्ति मे वाक्छलम्।

(४७) आर्य ! ननु विज्ञापयामि, तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजन इति।

---

(व) तत्प्रच्छादनं तस्य प्रच्छादनं गोपनम्।

चाण । अथेदानीं क्व गतः ?

चन्द । ण जाणामि कहिं गदो त्ति (४८) ।

चाण । स्मितं कृत्वा । कथं न ज्ञायते नाम ? भोः श्रेष्ठिन् ! शिरसि फणी, दूरे तत्प्रतीकारः । अन्यच्च नन्दमिव विष्णुगुप्तः (ग्र) । इत्यर्द्धोक्तौ लज्जां नाटयित्वा ।

चन्द । स्वगतम् ।

उवरि घणाघणथणिअं दूरे दइआ किमेदहावडिअम् ।
हिमवदि दिव्वोसहिओ सीसे सप्पो समाविट्टो (४९) ॥२१॥

चाण । चन्द्रगुप्तममात्यराक्षसः समुच्छेत्स्यतीति मैवं मंस्थाः । पश्य,

---

(४८) न जानामि कुत्र गत इति ।
(४९) उपरि घनाघनस्तनितं दूरे दयिता किमेतदापतितम् ।
हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः ॥

---

(ग्र) शिरसि फणीति । फणी सर्पः तत्सदृशः असह्यविक्रमो राजदण्ड इत्यर्थः, तत्प्रतीकारः तस्य राजदण्डरूपस्य फणिनः प्रतीकारः दूरे वर्त्तते इति शेषः । अयं भावः, अस्य निवारणोपायः राक्षसेन चन्द्रगुप्तहननं तत्प्रत्याशा दूरवर्त्तिनी फलिष्यति न वा इति संशय एव ।

(२१) घनाघनस्तनितं घनस्य मेघस्य अघनस्तनितं नास्ति घनं यस्मात् तत् अघनं तत् स्तनितं शब्दितम् अतिघोरगर्जितमित्यर्थः उपरि वर्त्तते इति शेषः, दयिता प्रिया दूरे तिष्ठतीति शेषः, एतत् किम् आपतितम् उपस्थितं, विरहिणां मेघध्वनिरतीवोद्दीपकत्वात् कष्टकरमिति भावः । हिमवति हिमालये दिव्यौषधयः सन्तीति शेषः, सर्पः शीर्षे समाविष्टः दंशनार्थमुपविष्ट इत्यर्थः । अयं भावः, रोगः सन्नद्धभावेन उपस्थितः किन्तु तदौषधस्य दूरवर्त्तित्वात् सुतरां प्रतीकाराक्षम इति ।

विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीर्वक्रनासादिभि-
र्नन्दे जीवति, या तदा न गमिता स्थैर्यं चलन्ती मुहुः ।
तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्तीं जगत्,
कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्त्तुं व्यवस्येत् पृथक् ॥ २२ ॥

अपिच, आह्लादितेत्यादि प्रागुक्तं पठति ।

चन्द । स्वगतम् । फलेण संपादिदं सोहदि दे बिक-त्थिदं (५०) (ष) ।

नेपथ्ये उत्सारणा (स) क्रियते ।

चाण । शार्ङ्गरव ! ज्ञायतां किमेतत् ?

शिष्यः । यदाज्ञापयत्युपाध्याय इति । निष्क्रम्य, पुनः प्रविश्य । उपाध्याय ! एष राज्ञश्चन्द्रगुप्तस्याज्ञया राजापथ्यकारी क्षपणको जीवसिद्धिः सनिकारं (ह) नगरान्निर्वास्यते ।

(५०) फलेन संपादितं शोभते ते विकत्थितम् ।

(२२) विक्रान्तैरिति । विक्रान्तैः विक्रमशालिभिः नयशालिभिः नीतिज्ञैः सुसचिवैः सुमन्त्रिभिः वक्रनासादिभिः प्रधानपुरुषैः जीवति नन्दे मुहुः वारंवारं चलन्ती अतिचञ्चला कुराजाश्रयादिति भावः या श्रीः स्थैर्यं न गमिता न प्रापिता न स्थिरीकृतेत्यर्थः, को जनः जगत् प्रह्लादयन्तीं द्युतिं चन्द्रिकामिव एकत्वमुपागतां स्थिरत्वमापादितां सचीत्या इति शेषः तां श्रियं चन्द्रादिव चन्द्रगुप्तनृपतेः पृथक् कर्त्तुं दूरीकर्त्तुं व्यवस्येत् प्रयतेत न कोऽपि तत् कर्त्तुं शक्नुयादित्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

(ष) विकत्थितम् आत्मनः श्लाघा ।

(स) उत्सारणा लोकानां सम्मर्द्दनिवारणार्थमपसारणा ।

(ह) सनिकारं सापमानम् ।

चाण। क्षपणक! अहह, अथवा, अनुभवतु राजापथ्यकारित्वस्य फलम्। भोः श्रेष्ठिन्! चन्दनदास! एवमयं, राजापथ्यकारिषु तीक्ष्णदण्डो राजा, तत् क्रियतां पथ्यं (च) सुहृद्वरः, समर्प्यतां राक्षसगृहजनः, चिरमनुभूयन्तां विविधा राजप्रसादाः।

चन्द। णत्थि मे गेहे अमच्चरक्खसघरअणो (५१)।

ततो नेपथ्ये कलकलः।

चाण। शार्ङ्गरव! ज्ञायतां पुनः किमेतत्।

शिष्यः। यदाज्ञापयत्युपाध्याय इति। निष्क्रम्य, पुनः प्रविश्य। उपाध्याय! असौ राजाज्ञया राजापथ्यकारी कायस्थः शकटदासः शूलमारोपयितुं नीयते।

चाण। स्वकर्म्मफलभाक् भवतु। भोः श्रेष्ठिन्! एवमयं राजापथ्यकारिषु तीक्ष्णदण्डो राजा, न मर्षयिष्यति (क) राक्षसकलत्रप्रच्छादनं भवतः, तद्रक्ष परकलत्रेणात्मनः कलत्रं जीवितञ्च।

चन्द। अज्ज! किं मे भअं दंसेसि? सन्तं पि गेहे अमच्चरक्खसस्स घरअणं ण समप्पेमि, किं उण असन्तं (५२)।

---

(५१) नास्ति मे गेहे अमात्यराक्षसगृहजनः।

(५२) आर्य्य! किं मे भयं दर्शयसि? सन्तमपि गेहे अमात्यराक्षसस्य गृहजनं न समर्पयामि, किं पुनरसन्तम्।

---

(च) पथ्यं हितम्।

(क) मर्षयिष्यति क्षमिष्यते।

चाण। चन्दनदास! एष ते निश्चयः?

चन्द। वाढ़ं, एसो मे थिरो णिच्चओ (५३)।

चाण। स्वगतम्। साधु चन्दनदास! साधु।

सुलभेष्वर्थलाभेषु परसंवेदने जनः।

क इदं दुष्करं कुर्यादिदानीं शिविना विना ॥ २२ ॥

प्रकाशम्। चन्दनदास! एष ते निश्चयः?

चन्द। वाढ़ं, एसो मे थिरो णिच्चओ (५४)।

चाण। सक्रोधम्। दुरात्मन्! दुष्टवणिक्! अनुभूयतां तर्हि राजकोपः।

चन्द। बाहू प्रसार्य। सज्जोम्हि, अणुचिट्ठदु अज्जो अत्तणो अहिआरस्स अणुरूअं [सरिसं] (५५)।

---

(५३) एष मे स्थिरो निश्चयः।

(५४) एष मे स्थिरो निश्चयः।

(५५) सज्जोऽस्मि, अनुतिष्ठतु आर्यः आत्मनोऽधिकारस्य अनुरूपम् [सदृशं] इति पाठे सदृशम्।

---

(२१) सुलभेष्विति। को जनः अर्थलाभेषु अर्थानां लाभः येभ्यः ते अर्थलाभाः अर्थागमोपाया इत्यर्थः तेषु सुलभेषु अपीति शेषः राक्षसकलत्रपरित्यागे राजानुग्रहलाभः तल्लाभे च विविधोन्नतिः सम्भाव्यत इति जानन्नपि तान् परित्यज्येति भावः। परसंवेदने परसपीड़ायां आत्मनः महत्यनिष्टे सम्भवित्यपीति भावः शिविना राज्ञा विना इदानीम् इदं परकलत्राच्छादनरूपं दुष्करम् असाध्यं राजदण्डाद्यवश्यम्भावादिति भावः कर्म कुर्यात् न कोऽपीत्यर्थः। शिविना कपोतरक्षणाय श्येनसन्तोषार्थमात्मनः हृदयमांसं दत्तमिति पौराणिकी वार्त्तानुसन्धेया। अनुष्टुप् वृत्तम्।

चाण। सक्रोधम्। शार्ङ्गरव! उच्यतामस्मद्वचनात् कालपाशिको दण्डपाशिकश्च, शीघ्रमयं दुष्टवणिक् निगृह्यताम्, अथवा तिष्ठतु, उच्यतां दुर्गपालो विजयपालश्च, गृहीतगृहसारमेनं (ख) सपुत्रकलत्रं संयम्य, रक्ष तावत्, यावन्मया वृषलाय कथ्यते, स एवास्य सर्वस्वप्राणहरणं दण्डमाज्ञापयिष्यति।

शिष्यः। यदाज्ञापयत्युपाध्याय इति। श्रेष्ठिन्! इत इतः।

चन्द। उत्थाय। अज्ज! अअमाअच्छामि। स्वगतम्। दिट्ठिआ मित्तकज्जेण मे विणासो जणिदो, ण उण पुरिसदोसेण (५६) (ग)। परिक्रम्य शिष्येण सह निष्क्रान्तः।

चाण। सहर्षम्। हन्त, लब्ध इदानीं राक्षसः। कुतः

त्यजत्यप्रियवत् प्राणान् यथा तस्यायमापदि।
तथैवास्यापदि प्राणा नूनं तस्यापि न प्रियाः॥ २४॥

---

(५६) आर्य्य! अयमागच्छामि। दिष्ट्या मित्रकार्य्येण मे विनाशो जनितो, न पुनः पुरुषदोषेण।

---

(ख) गृहीतगृहसारं गृहीतः गृहस्य सारः मूलधनादिरूपस्थिरांशः यस्य स तथोक्तस्तम्।

(ग) पुरुषदोषेण स्वापराधेन इत्यर्थः।

(२४) त्यजतीति। अयं चन्दनदासः तस्य राक्षसस्य आपदि पुत्रकलत्रादीनां शत्रुहस्ते पतितप्राप्तरूपायां तद्रक्षणार्थेति भावः प्राणान् अप्रियवत् अनिष्टवत् यथा त्यजति तस्य राक्षसस्यापि प्राणाः अस्य चन्दन-

नेपथ्ये कलकलः।

चाण। शार्ङ्गरव!

प्रविश्य शिष्यः। उपाध्याय! आज्ञापयतु।

चाण। ज्ञायतां किमेतत्।

निष्क्रम्य विभाव्य पुनः प्रविश्य सम्भ्रान्तः शिष्यः। उपाध्याय! एष खलु शकटदासं बध्यमानं बध्यभूमेरादाय समपक्रान्तः (घ) सिद्धार्थकः।

चाण। स्वगतम्। साधु सिद्धार्थक! साधु, कृतः कार्य्यारम्भः। प्रकाशम्। प्रसह्य किमपक्रान्तः। सक्रोधम्। वत्स! उच्यतां भागुरायणो यथा त्वरितमेनं सम्भावयति (ङ)।

शिष्यः। पुनः तथा कृत्वा प्रविश्य सविषादम्। उपाध्याय! हा धिक् कष्टमपक्रान्तो भागुरायणः।

चाण। स्वगतम्। व्रजतु कार्य्यसिद्धये। प्रकाशं सक्रोधमिव। वत्स! कृतं विषादेन, उच्यतामस्मद्वचनाद्भद्रभटपुरुषदत्तहिङ्गुरातबलगुप्तराजसेनरोहिताक्षविजयवर्म्माणः, शीघ्रमुपसृत्य, गृह्यतां दुरात्मा भागुरायणः।

शिष्यः। यदाज्ञापयत्युपाध्यायः। इति निष्क्रम्य पुनः प्रविश्य सविषादम्। उपाध्याय! हा धिक् कष्टं, सर्वमेव

---

दासस्य आपदि राजदण्डेन समूलघातरूपायां सत्यां तथैव नूनं निश्चितं न प्रिया भविष्यन्तीति शेषः। अतएव पृष्टम्।

(घ) समपक्रान्तः पलायितः।

(ङ) सम्भावयति धरति।

नन्दमाकुलीभूतं (च), तेऽपि खलु भद्रभटप्रभृतयः प्रथमम-प्रभातायामेव रजन्यामपक्रान्ताः ।

चाण० । स्वगतम् । सर्वेषामेव शिवाः पन्थानः सन्तु ! प्रकाशम् । वत्स ! अलं विषादेन । पश्य

ये याताः किमपि प्रधार्य्य हृदये, पूर्वं गता एव ते
ये तिष्ठन्ति, भवन्तु तेऽपि गमने कामं प्रकामोद्यमाः ।
एका केवलमर्थसाधनविधौ सेनाशतेभ्योऽधिका
नन्दोन्मूलनदृष्टवीर्य्यमहिमा बुद्धिस्तु मा गान्मम ॥ २५॥

उत्थाय प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा । एष खलु दुरात्मनो भद्रभट-प्रभृतीनाहरामि । आत्मगतम् । दुरात्मन् राक्षस ! क्वेदानीं यास्यसि । एषोऽहमचिराद्भवन्तं

---

(च) नन्दं प्रकृतिमण्डलम् । आकुलीभूतं व्यतिव्यस्तम् ।

(२५) ये याता इति । ये भागुरायणादयः किमपि हृदये प्रधार्य्य लनर्थं कृत्वा पूर्वं याताः ते गता एव तदनुशोचनं वृथैव गतस्य शोचनं नास्तीति न्यायादिति भावः, ये जना अत्र तिष्ठन्ति तेऽपि गमने प्रकामो-द्यमाः भवन्तु गच्छन्तु इत्यर्थः मया स्वबुद्ध्या एव सर्वकार्य्याणां सम्पाद्य-त्वात् तैरपि न मे प्रयोजनमिति भावः । अर्थसाधनविधौ कार्य्य-सम्पादनरूपे विधाने सेनाशतेभ्यः बहुसेनाभ्यः अधिका अधिक-समर्था नन्दोन्मूलनदृष्टवीर्य्यमहिमा नन्दानाम् उन्मूलनेन दृष्टः वीर्यस्य शक्तेः महिमा माहात्म्यं यस्यास्तादृशी एका अद्वितीया मम बुद्धिस्तु केवलं मा गात् न गच्छतु बुद्धिबलेनैवाहं सर्वं सम्पादयिष्यामीति भावः । शार्दूलविक्रीडितं वृत्तम् ।

स्वच्छन्दमेकचरमुज्ज्वलदानशक्ति-
मुत्सेकिना बलमदेन विगाह्यमानम् ।
बुद्ध्या निगृह्य, वृषलस्य कृते, क्रियाया-
मारण्यकं गजमिव प्रगुणीकरोमि ॥ २६ ॥

इति निष्क्रान्ताः सर्वे ।

इति मुद्राराक्षसे (ख) प्रथमोऽङ्कः ।

---

(२६) स्वच्छन्दमिति । एकचरं एकः निःसहायः यूथहीनश्च चरतीति तथोक्तम् उज्ज्वलदानशक्तिम् उज्ज्वला उत्कृष्टा दानशक्तिर्वितरणशक्तिः मदजलक्षरणसामर्थ्यञ्च यस्य तथाविधम् उत्सेकिना उद्रिक्तेन बलमदेन सैन्यगर्वेण दैहिकसामर्थ्यगर्वेण च स्वच्छन्दं यथेच्छं विगाह्यमानं विचरन्तम् आरण्यकं वन्यं गजमिव भवन्तमिति गद्यस्थपदमत्राकृष्यान्वयः कार्यः वृषलस्य चन्द्रगुप्तस्य कृते निमित्तं प्रयोजनसाधनार्थमित्यर्थः बुद्ध्या निगृह्य वशीकृत्य क्रियायां तस्यैव साचिव्यग्रहणरूपायां वाहनादिरूपायाञ्च प्रगुणीकरोमि प्रकृष्टगुणवन्तम् अनुरागिणमित्यर्थः सुदृढरज्जुबद्धञ्च करोमीत्यर्थः । वसन्ततिलकं वृत्तम् ।

(ख) मुद्राराक्षसे इति । मुद्रया गृहीतः राक्षसो यत्रेति मध्यपदलोपी बहुव्रीहिसमासो बोद्धव्यः ।

---

# द्वितीयोऽङ्कः ।

ततः प्रविशत्याहितुण्डिकः (क) ।

आहि ।

जाणन्ति तन्तजुत्तिं जहट्ठिअं मण्डलं अहिलिहन्ति ।
जे मन्तरक्खणपरा ते सप्पणराहिबे उबचरन्ति (१) ॥ १ ॥

आकाशे । अज्ज ! किं भणासि को तुमं त्ति ? अज्ज ! अहं क्खु आहितुण्डिओ जिण्णविसो णाम । पुनराकाशे । किं भणासि अहंपि अहिणा खेलिदुं इच्छामि त्ति ? अध कदरं

---

(१) जानन्ति तन्त्रयुक्तिं यथास्थितं मण्डलमभिलिखन्ति ।
ये मन्त्ररक्षणपरास्ते सर्पनराधिपे उपचरन्ति ॥

---

(क) आहितुण्डिकः अहितुण्डेन सर्पमुखेन जीवतीति सर्पक्रीडनोपजीवीत्यर्थः ।

(१) जानन्तीति । ये जनाः तन्त्रयुक्तिं तन्त्रस्य शास्त्रविशेषस्य युक्तिं सिद्धान्तं यथास्थितं यथायथं जानन्ति, मण्डलं द्वादशविधराजमण्डलम् अयमरिः, अयं मित्रम्, अयमरिमित्रम्, अयमुदासीनः, अयं विजिगीषुः, इत्यादिक्रमेण अभिलिखन्ति अभिलक्ष्य पताकादीन् कुर्वन्ति, पक्षे मण्डलं सर्पकुण्डलस्थानमभिलक्ष्य भूमिं विदारन्तीत्यर्थः । ये च मन्त्ररक्षणपराः मन्त्रकार्य्यस्य गोपनशीलाः गारुडादिमन्त्रधारकाश्च ते सर्पनराधिपे सर्प एव नराधिपः तस्मिन् उपचरन्ति तदुपजीव्य विचरन्तीत्यर्थः, एतेन राज्यतन्त्रावेक्षकस्य सर्पोपजीविनश्च अतिसावधानतया वर्त्तितव्यम्, अन्यथा आत्मविनाशसम्भव इति भावः ।

उण अज्जो वित्तिं उवजीवदि ? पुनराकाशे। किं भणासि राअउलसेवओ त्ति? णं खेलदि ज्जेव अज्जो अहिणा (ख)। किं भणासि कधं त्ति? अमन्तोसहिकुसलो वालग्गाही, अग्गहिदङ्कुसो मत्तगअवरारोही, लद्धाहिआरो जिअकासी राअसेवओ त्ति एदे तिण्णि अवस्सं विणासमणुभवन्ति (२) (ग)।

---

(२) आर्य ! किं भणसि कस्त्वमिति ? आर्य ! अहं खलु आहितुण्डिको जीर्णविषो नाम। किं भणसि अहमपि अहिना खेलितुमिच्छामीति ? अथ कतरां पुनरार्यो वृत्तिम् उपजीवति ? किं भणसि राजकुलसेवक इति ? ननु खेलति एव आर्योऽहिना। किं भणसि कथमिति ? अमन्त्रौषधिकुशलो व्यालग्राही, अगृहीताङ्कुशो मत्तगजवरारोही, लब्धाधिकारो जितकाशी राजसेवक इत्येते त्रयोऽवश्यं विनाशमनुभवन्ति।

---

(ख) किं भणसि राजकुलसेवक इति ? ननु खेलति एव आर्यः अहिना। राजकुलसेवकस्य सर्वदा शङ्कितेन स्थातव्यं किञ्चित्स्खलने प्राणनाशसम्भवादिति भावः।

(ग) अमन्त्रौषधिकुशलः मन्त्रे गारुडादिके औषधे च अकुशलः अनिपुणः अज्ञ इत्यर्थः व्यालग्राही सर्पजीवी, अगृहीतः अङ्कुशः येन तादृशः शासनदण्डरहित इत्यर्थः मत्तगजेन्द्रारोही, लब्धः अधिकारः कार्यप्रभुत्वं येन तादृशः अत एव जितकाशी गर्वितः अनात्मज्ञ इत्यर्थः राजसेवकः एते त्रयः अवश्यं निश्चितं विनाशम् अनुभवन्ति प्राप्नुवन्तीत्यर्थः एतेषां सर्वथा स्खलनसम्भवादिति भावः।

कथं, दिट्ठमत्तो अदिक्कन्तो एसो। पुनराकाशे। अज्ज! तुमं उण किं भणासि किं एदेसु पेड़ासमुग्गकेसु त्ति? अज्ज! अप्पजीविआसम्पादआ सप्पा। पुनराकाशे। किं भणासि पेक्खिदुमिच्छामि त्ति? पसीददु पसीददु अज्जो। अत्थानं क्खु, एदं, ता जइ दे कोदूहलं, ता एहि एदस्सिं आआसे दंसेमि। पुनराकाशे। किं भणासि एदं क्खु, भट्टिणो अमच्चरक्खसस्स गेहं, णत्थि इध अम्हारिसाणं प्पवेसो त्ति? तेण हि गच्छतु अज्जो। जीविआए प्पसादेण अत्थि एत्थ मम प्पवेसो त्ति। कधं एसोवि अतिक्कन्तो (२)। दिशोऽवलोक्य संस्कृतमाश्रित्य स्वगतम्। अहो! आश्चर्य्यम्, चाणक्यमतिपरिगृहीतं चन्द्रगुप्तमवलोक्य, विफलमिव राक्षसप्रयत्नमवगच्छामि। राक्षसमतिपरिगृहीतञ्च मलयकेतुमवलोक्य, चलितमिवाधिराज्याच्चन्द्रगुप्तमवगच्छामि। तथाहि

कौटिल्यधीरज्जुनिबद्धमूर्त्तिं
मन्ये स्थिरां मौर्य्यकुलस्य लक्ष्मीम्।

---

(२) कथं, दृष्टमात्रोऽतिक्रान्त एषः। आर्य्य! त्वं पुनः किं भणसि किमेतेषु पेटकसमुद्गकेष्विति? आर्य्य! आत्मजीविकासम्पादकाः सर्पाः। किं भणसि प्रेक्षितुमिच्छामीति? प्रसीदतु प्रसीदत्वार्य्यः। अस्थानं खलु एतत्, तस्मात् यदि ते कौतूहलं, तदेहि एतस्मिन्नावासे दर्शयामि। किं भणसि इदं खलु भर्त्तुरमात्यराक्षसस्य गृहं, नास्त्यस्मादृशानां प्रवेश इति? तेन हि गच्छत्वार्य्यः। जीविकायाः प्रसादेन अस्तीह मम प्रवेश इति। कथमेषोऽपि अतिक्रान्तः।

उपायहस्तैरपि राक्षसेन
विकृष्यमाणामिव लक्षयामि ॥ २ ॥

तदेवमनयोः सुनयशालिनोः सचिवयोर्विरोधे संशयितेव (घ) राज्य[नन्दकुल]लक्ष्मीर्लक्ष्यते। कुतः

विरुद्धयोर्भृशमिह मन्त्रिमुख्ययो-
र्महावने वनगजयोरिवान्तरे।
अनिश्चयाद्गजवशयेव भीतया
गतागतैर्भृशमिह खिद्यते श्रिया ॥ ३ ॥

---

(२) कौटिल्येति। मौर्यकुलस्य चन्द्रगुप्तवंशस्य लक्ष्मीं कौटिल्यस्य चाणक्यस्य धीर्बुद्धिरेव रज्जुः तया निबद्धा मूर्त्तिर्यस्यास्तादृशीम् अत एव स्थिरां निश्चलां मन्ये, तथा राक्षसेन उपायहस्तैः उपायाः सामादयः "सामदानभेददण्डमित्युपायचतुष्टयम्" इत्यमरः, एव हस्ताः तैः विकृष्यमाणाम् आकृष्यमाणामिव लक्षयामि सम्भावयामि। अत्रोत्प्रेक्षालङ्कारः, "भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति लक्षणात्। अत्र इन्द्रवज्रोपेन्द्रवज्रयोः सङ्कररूपा उपजातिः वृत्तम्।

(घ) सुनयशालिनोः सुनीतिज्ञयोः। संशयितेव कुत्र तिष्ठामीति सन्देहाकुलेव इत्यर्थः।

(३) विरुद्धयोरिति। महावने आहवे युद्धे वनगजयोरिव भृशम् अतिमात्रं विरुद्धयोः विरोधमाचरतोः मन्त्रिमुख्ययोः चाणक्यराक्षसयोः इह अस्मिन् परस्परजयरूपे व्यापारे अनिश्चयात् कस्य जयो भविष्यतीति निश्चयाभावात् भीतया गजवशया करिण्या इव श्रिया राजलक्ष्म्या गतागतैः गमनागमनैः भृशम् अतिमात्रं खिद्यत इव। अत्रापि उत्प्रेक्षालङ्कारः। रुचिरावृत्तं, "जभौ सजौ गिति रुचिरा चतुर्ग्रहैः" इति लक्षणात्।

तद्यावदहममात्यराक्षसं पश्यामि ।

ततः प्रविशत्यासनस्थः स्वभवनगतः पुरुषेणानुगम्यमानः सचिन्तो राक्षसः ।

राक्ष । ऊर्ध्वमवलोक्य सवाष्पम् । कष्टं भोः, कष्टम् ।

वृष्णीनामिव नीतिविक्रमगुणव्यापारशान्तद्विषां
नन्दानां विपुले कुलेऽकरुणया नीते नियत्या क्षयम् ।
चिन्ताविष्टसमाकुलेन मनसा रात्रिन्दिवं जाग्रतः
सैवेयं मम चित्रकर्मरचना भित्तिं विना वर्त्तते ॥ ४ ॥

अथवा,

नेदं विस्मृतभक्तिना न विषयव्यापारमूढात्मना
प्राणप्रच्युतिभीरुणा न च मया, नात्मप्रतिष्ठार्थिना ।
अत्यर्थं परदास्यमेत्य निपुणं नीतौ मनो दीयते
देवः स्वर्गगतोऽपि शात्रववधेनाराधितः स्यादिति ॥ ५ ॥

---

(४) वृष्णीनामिति । नीतिः दण्डनीतिः विक्रमः शौर्यं गुणाः सन्धिविग्रहादयः तेषां व्यापारेण यथास्थानं प्रयोगेण शान्ताः द्विषः शत्रवः येषां तादृशानां वृष्णीनां यदूनामिव नन्दानां विपुले महति कुले अकरुणया निष्ठुरया नियत्या दैवेन क्षयं नीते चिन्ताविष्टसमाकुलेन कथमेतदापतितमिति चिन्तासक्तिव्याकुलेन मनसा रात्रिन्दिवं जाग्रतः निद्राभावात् चिन्तयत इत्यर्थः मम सैव चिन्तैव भित्तिं चित्रलेखना-धारविशेषं विना चित्रकर्मरचना तत्स्वरूपा इत्यर्थः वर्त्तते चिन्तया विविधविषयिणी कल्पना चाविर्भवति परं प्रकृतस्थानं न प्राप्यते इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(५) नेदमिति । परदास्यं पराधीनताम् एत्य प्राप्य चाश्रित्य इत्यर्थः मया नीतौ यत् मनः अत्यर्थम् अतीव दीयते इदं विस्मृतभक्तिना न

आकाशमवलोकयन् सास्रम्। भगवति! कमलालये! भृशमगुणज्ञासि। कुतः

आनन्दहेतुमपि देवमपास्य नन्दं
रक्तासि किं, कथय, वैरिणि मौर्य्यपुत्त्रे।
दानाम्बुराजिरिव गन्धगजस्य नाशे
तत्रैव किं न, चपले! प्रलयं गतासि॥ ६॥

अपिच, अनभिजाते! (ङ)

---

स्वाम्यनुरागं मरतैव दीयते इत्यर्थः। विषयव्यापारमूढ़ात्मना न विषयव्यापारे सामादिप्रयोगे मूढ़ः अनभिज्ञः आत्मा यस्य तादृशेन न सामादिप्रयोगं यथायथं जानतैवेत्यर्थः। अतथाकरणे प्राणविनाशशङ्कापि नास्तीति दर्शयन्नाह प्राणेति। प्राणप्रच्युतिः प्राणनाशः ततो भीरुणा शङ्कितेन न अपितु निर्भीकेणैव मनो दीयते इत्यर्थः। आत्मप्रतिष्ठा आत्मगौरवं तस्य अर्थिना अभिलाषिणा च न यशोलाभार्थं मनो न दीयते इत्यर्थः। किं तर्ह्यत आह देव इति देवः नन्दः स्वर्गगतोऽपि शात्रवबधेन शत्रुनाशेन आराधितः आप्यायितः स्यात् इति अस्मादेव कारणात् मनो दीयते इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तमत्रापि।

(६) आनन्दहेतुमिति। हे चपले! चञ्चलस्वभावे! आनन्दहेतुम् अपि देवं नन्दम् अपास्य विहाय किं कथं वैरिणि तद्विपक्षे मौर्य्यपुत्रे रक्तासि अनुरागिणी असि। गन्धगजस्य गन्धप्रधानहस्तिनः नाशे सति तदीया दानाम्बुराजिः मदजलधारा इव तत्रैव नन्दे किं कथं प्रलयं विलयं न गतासि कथय, तादृशं गुणशालिनं पतिं विहाय अगुणज्ञे तवाश्रयणमनुचितमिति भावः। वसन्ततिलकं वृत्तम्।

(ङ) अनभिजाते! असद्वंशजे! अकुलीने! दुष्कुलजातत्वेनाशाः असदाचरणे प्रवृत्तिरिति भावः।

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः,
पतिं, पापे! मौर्य्यं यदसि कुलहीनं कृतवती।
प्रकृत्या वा काशप्रभवकुसुमप्रान्तचपला,
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी॥ ७॥

अपिच, अविनीते! तदहमाश्रयोन्मूलनेनैव त्वामकामां करोमि। विचिन्त्य। मया तावत् सुहृत्तमस्य चन्दनदासस्य गृहे गृहजनं निक्षिप्य नगरान्निर्गच्छता न्याय्यमनुष्ठितम्। किंकारणमिति? कुसुमपुराभियोगं प्रति अनुदासीनो राक्षस इति, तत्रस्थानामस्माभिः सहैककार्य्याणां देवपादोपजीविनां नोद्यमः शिथिलीभविष्यतीति। चन्द्रगुप्तशरीरमभिद्रोग्धुमस्मत्प्रयुक्तानां तीक्ष्णरसदायिनामुपसंग्रहार्थं, परकृत्योपजापार्थञ्च, महता कोषसञ्चयेन स्थापितः शकटदासः। प्रतिक्षणमरातिवृत्तान्तोपलब्धये,

---

(७) पृथिव्यामिति। प्रथितकुलजाः विख्यातकुलोद्भवाः भूमिपतयः पृथिव्यां किं दग्धाः भस्मीकृताः दैवेनेति शेषः नैवेत्यर्थः। हे पापे! यत् यस्मात् कुलहीनम् अकुलीनं मौर्य्यं पतिं कृतवती महाकुलीनासद्भावे तुच्छकुलाश्रयणं सम्भवति परं सत्सु महाकुलीनेषु तदाश्रयणमतीव गर्हितमिति भावः। अथवा पुरन्ध्रीणां स्त्रीणां काशप्रभवकुसुमप्रान्तचपला काशः प्रभवो यस्य तादृशं यत् कुसुमं काशपुष्पमित्यर्थः तस्य प्रान्तम् अग्रं तद्वत् चपला चञ्चला क्षणस्थायिनीत्यर्थः। आकाशकुसुमप्रान्तचपलेत्यपपाठः तस्य मिथ्यात्वात् उपमानासम्भवात्। प्रज्ञा बुद्धिः प्रकृत्या स्वभावेन पुरुषस्य गुणविज्ञाने विमुखी भवतीति शेषः सहसा गुणविज्ञानस्य असम्भवात् धैर्य्यमनामेक्षते न तु चापल्यमिति भावः। शिखरिणी वृत्तम्।

तत्संहतिभेदाय च व्यापारिताः (च) सुहृदो जीवसिद्धिप्रभृतयस्तत् किमत्र बहुना ।

इष्टात्मजः सपदि सान्वय एव देवः,
शार्दूलपोतमिव यं परिपुष्य नष्टः ।
तस्यैव बुद्धिविशिखेन भिनद्मि मर्म
वर्मीभवेद्यदि न दैवमदृश्यमानम् ॥ ८ ॥

ततः प्रविशति कञ्चुकी ।

कञ्चु० । कामं नन्दमिव प्रमथ्य जरया चाणक्यनीत्या यथा
धर्मो मौर्य्य इव, क्रमेण, नगरे नीतः प्रतिष्ठां मयि ।
तं सम्प्रत्युपचीयमानमपि मे लब्धान्तरः सेवया
लोभो राक्षसवज्जयाय यतते, जेतुं न शक्नोति च ॥ ९ ॥

---

(च) अकामां विफलमनोरथाम् । परकृत्यापजापार्थं शत्रुकार्य्य-भङ्गार्थम् अथवा शत्रुकार्य्यकारिणाम् उपजापार्थं भेदार्थं मनोभङ्ग-करणार्थमित्यर्थः । कोषक्षयेन धनराशिना । तत्संहतिभेदाय तेषाम् अरातीनां संहतिः सम्मेलनं तस्या भेदः भङ्गः तस्मै, सम्मेलने शत्रूणां दुर्जयता, भेदे सुजयतेति भावः । व्यापारिताः नियुक्ताः ।

(८) इष्टात्मज इति । इष्टः प्रियः आत्मजः यस्य सः देवः नन्दः सान्वयः सवंश एव पुत्राद्यैकसहित एव इत्यर्थः शार्दूलपोतं व्याघ्रशावकमिव यं चन्द्रगुप्तं परिपुष्य दासीगर्भजमपि आत्मजत्वात् परिपाल्य इत्यर्थः नष्टः अहं बुद्धिविशिखेन प्रज्ञारूपशरेण तस्य चन्द्रगुप्तस्यैव मर्म सन्धिस्थानं यस्मिन्नाहते मृत्युर्भवति तत् स्थानं मर्म भिनद्मि द्विधा करोमि । यदि दैवं चन्द्रगुप्तशुभादृष्टम् अदृश्यमानम् असहमानं सत् तस्य न वर्मी-भवेत् कवचरूपं स्यात् रक्षकं न भवेदित्यर्थः । वसन्ततिलकं वृत्तम् ।

(९) काममिति । चाणक्यनीत्या यथा चाणक्यनयेनेव जरया वार्द्धक्येन नन्दमिव कामं विषयाभिलाषं प्रमथ्य अभिभूय नगरे मौर्य्य

दृष्ट्वा । अयममात्यराक्षसः । परिक्रम्योपसृत्य च । अमात्य ! स्वस्ति भवते ।

राक्ष । आर्य्य ! जाजले ! अभिवादये । प्रियंवदक ! आसनमत्रभवत उपनय ।

प्रियं । एदं आसणं उपविसदु अज्जो (४) ।

कञ्चु । नाट्येनोपविश्य । अमात्य ! कुमारो मलयकेतुरत्रभवन्तं विज्ञापयति, चिरात् प्रभृत्यार्य्यः परित्यक्तोचितशरीरसंस्कार इति पीड्यते मे हृदयम् । यद्यपि स्वामिगुणाः सहसा न शक्यन्ते विस्मर्त्तुं तथापि मद्विज्ञापनां मानयितुमर्हत्यार्य्यः । इत्याभरणानि दर्शयित्वा । अमात्य ! इमान्याभरणानि कुमारेण स्वशरीरादवतार्य्य प्रेषितानि, धारयितुमर्हत्यार्य्यः ।

राक्ष । आर्य्य ! जाजले ! विज्ञाप्यतां मद्वचनात् कुमारः, विस्मृता मया स्वामिगुणास्तव गुणपक्षपातिना । किन्तु

---

(४) इदम् आसनम् उपविशतु आर्य्यः ।

---

इव मयि क्रमेण धर्म्मः प्रतिष्ठां नीतः । जरया विषयरागोऽभिभूयते हर्षे च मतिराधीयते इति भावः । सेवया विषयाणामिति शेषः लब्धान्तरः प्राप्तावकाशः लोभः सम्प्रति उपचीयमानमपि वर्द्धमानमपि तं धर्मं राक्षसवत् चन्द्रगुप्तमिति शेषः जयाय यतते चेष्टते, जेतुम् अभिभवितुं न शक्नोति च, जरायां प्रसरन्नपि लोभः विषयवैराग्यात् धर्मन्हानिकरणे न समर्थो भवतीत्यर्थः । शार्द्दूलविक्रीड़ितं वृत्तम् ।

न तावन्निर्वीर्य्यैः परपरिभवाक्रान्तिक्षपणै-
र्वहाम्यङ्गैरेभिः प्रतनुमपि संस्काररचनाम्।
न यावन्निःशेषक्षयितरिपुचक्रस्य निहितं
सुगाङ्गे, हेमाङ्कं, नृवर! तव सिंहासनमिदम् ॥१०॥

कञ्चु। अमात्ये, त्वयि नेतरि सुलभमेतत् कुमारस्य, तत् प्रतिमान्यतां कुमारस्य प्रथमः प्रणयः (छ)।

राक्ष। आर्य्य! कुमार इवानतिक्रमणीयवचनो भवानपि तदनुष्ठीयते कुमारस्याज्ञा।

कञ्चु। नाट्येन भूषणानि परिधाप्य। स्वस्ति भवते, साधयाम्यहम् (ज)।

राक्ष। आर्य्य! अभिवादये।

कञ्चु। स्वनियोग साधयाम्यहमिति। निष्क्रान्तः।

राक्ष। प्रियंवदक! ज्ञायतां कोऽयमस्मद्दर्शनार्थी द्वारि तिष्ठति।

---

(१०) न तावदिति। हे नृवर! नरश्रेष्ठ! यावत् निःशेषं यथा तथा क्षयितं नाशितं रिपुचक्रं शत्रुसमूहो यस्य तादृशस्य तव हेमाङ्कं स्वर्णाङ्कितमित्यर्थः इदं सिंहासनं सुगाङ्गे तदाख्ये पाटलिपुत्रनगर-प्रासादे न निहितं स्थापितं भवेदिति शेषः तावत् परपरिभवाक्रान्ति-क्षपणैः परेषां परिभवः परपरिभवः तस्य आक्रान्त्या आक्रमणेन क्षपणैः दीनैः एभिः अङ्गैः प्रतनुमपि स्वल्पामपि संस्काररचनां देह-मार्जनालङ्कारधारणादिरूपं न वहामि। शिखरिणीवृत्तमिति।

(छ) प्रणयः प्रार्थना।

(ज) साधयाम्यहं, नाटके गच्छामीत्यत्र साधयामीति प्रयुज्यते। अहं कार्य्यसाधनार्थं गच्छामीत्यर्थः।

प्रियं। जं अज्जो आणवेदि त्ति। निष्क्रम्य आहितुण्डिकं दृष्ट्वा। णं अज्ज ! को तुमं (५) ?

आहि। भद्द ! अहं क्खु, आहितुण्डिओ, जिण्णविसो णाम, इच्छामि अमच्चरक्खसस्स पुरदो सप्पेहिं खेलिदुं (६)।

प्रियं। चिट्ठ, जाव अमच्चस्स णिवेदेमि। राक्षसमुपसृत्य। अज्ज ! एसो क्खु सप्पोवजीवो इच्छदि सप्पेहिं अमच्चस्स पुरदो खेलिदुं (७)।

राक्ष। वामाक्षिस्पन्दनं सूचयित्वा आत्मगतम्। कथं प्रथममेव सर्पदर्शनम्। प्रकाशम्। प्रियंवदक ! न नः कुतूहलमस्ति सर्पदर्शने, तत् परितोष्य विसर्जयैनम्।

प्रियं। जं अज्जो आणवेदि। निष्क्रम्य आहितुण्डिकमुपसृत्य। भद्द ! एसो क्खु, दे अमच्चो अदंसणेण फलं देदि [पसादं करेदि] ण उण दंसणेण (८)।

आहि। भद्द ! विण्णवेहि मम वअणेण अमच्चं, ण

---

(५) यदार्य्य आज्ञापयतीति। ननु आर्य्य ! कस्त्वम् ?

(६) भद्र ! अहं खल्वाहितुण्डिको, जीर्णविषो नाम, इच्छाम्यमात्यराक्षसस्य पुरतः सर्पैः खेलितुम्।

(७) तिष्ठ, यावदमात्यस्य निवेदयामि। आर्य्य ! एष खलु सर्पोपजीवी इच्छति सर्पैः अमात्यस्य पुरतः खेलितुम्।

(८) यदार्य्य आज्ञापयति। भद्र ! एष खलु ते अमात्योऽदर्शनेन फलं ददाति [पाठान्तरे प्रसादं करोति] न पुनर्दर्शनेन।

केवलं अहं सप्पोवजीवी, पाउअकवी (क) क्खु अहं, ता जइ मम दंसणेण अमच्चो प्पसादं ण करेदि, ता एदं पि पत्तअं वाचेदुं प्पसीददु त्ति (६)। पत्रमर्पयति।

प्रियं। पत्रं गृहीत्वा राक्षसमुपसृत्य। अमच्च! एसो क्खु आहितुण्डिओ विण्णवेदि, ण केवलं अहं सप्पोवजीवी, पाउअकवी क्खु अहं, ता जइ मे अमच्चो दंसणेण प्पसादं ण करेदि, ता एदं पि पत्तअं वाचेदुं प्पसीददु त्ति (१०)।

राक्ष। पत्रं गृहीत्वा वाचयति।

पाउण णिरवसेसं, कुसुमरसं अत्तणो कुसलदाए।
जं उग्गिरदि भमरो तं, अस्साणं कुणइ कज्जं (११) ॥११॥

---

(६) भद्र! विज्ञापय मम वचनेनामात्यं, न केवलमहं सर्पोपजीवी, प्राकृतकविः खल्वहं, तस्माद्यदि मे दर्शनेनामात्यः प्रसादं न करोति, तदा एतदपि पत्रकं वाचयितुं प्रसीदत्विति।

(१०) अमात्य! एष खल्वाहितुण्डिको विज्ञापयति; न केवलमहं सर्पोपजीवी, प्राकृतकविः खलु अहं, तस्माद्यदि मे अमात्यो दर्शनेन प्रसादं न करोति, तदा एतदपि तावत् पत्रकं वाचयितुं प्रसीदत्विति।

(११) पीत्वा निरवशेषं कुसुमरसमात्मनः कुशलतया।
यदुद्गिरति भ्रमरस्तदन्येषां करोति कार्य्यम् ॥

---

(क) प्राकृतकविः सुपण्डितः प्रकृतिपरिज्ञाने यस्त्वया नियुक्तः सोऽहमिति च ध्वनिः।

(११) आत्मनः कुशलतया नैपुण्येन निरवशेषं समग्रं कुसुमरसं पीत्वा भ्रमरः यद् उद्गिरति तत् उद्गीर्य्यमाणं मधु अन्येषां कार्य्यं दैवपैत्रादिकं करोति अनेन मया कौशलेन कुसुमपुरवृत्तान्तः परिज्ञातः, तच्छ्रवणेन नियोक्तुर्ज्ञातार्थतया कार्य्यनिश्चयो भवितेति ध्वन्यते।

राक्ष। आत्मगतम्। अये! कुसुमपुरवृत्तान्तज्ञोऽहं भवत्-प्रणिधिश्चेति गाथार्थः। आः कार्य्यव्यग्रत्वान्मनसः, प्रभूतत्वाच्च प्रणिधीनां, विस्मृतम्, इदानीं स्मृतिरुपलब्धा। व्यक्तमाहितुण्डिकच्छद्मना कुसुमपुरादागतेन विराधगुप्तेनानेन भवितव्यम्। प्रकाशम्। प्रियंवदक! प्रवेशयैनं, सुकविरेषः, श्रोतव्यमस्मात् सुभाषितम्।

प्रियं। जं अज्जो आणवेदि त्ति। आहितुण्डिकमुपसृत्य। उपसप्पदु अज्जो (१२)।

आहि। नाट्येनोपसृत्यावलोक्य च स्वगतम्। अये! अयममात्यराक्षसस्तिष्ठति। संस्कृतमाश्रित्य। स एषः,

वामां बाहुलतां निवेश्य शिथिलं कण्ठे विवृत्तानना,
स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः।
गाढालिङ्गनसङ्गपीडितमुखं यस्योद्यमाशङ्किनी,
मौर्य्यस्योरसि नाधुनापि कुरुते वामेतरं श्रीः स्तनम् ॥१२॥

(१२) यदार्य्य आज्ञापयति। उपसर्पतु आर्य्यः।

(१२) मौर्य्यस्य अचिरेण राज्याभिषेकेण राक्षसप्रयत्नतः भ्रंशभयेन राजलक्ष्म्याः सम्पूर्णतया नाद्यापि तदाश्रयणमिति दर्शयन्नाह वामामिति। श्रीः वामां स्त्रीणां पतिवामभागे शयनविधानात् सुतरां प्रथमं वामभुजस्यैव पत्युः कण्ठे दानसम्भवादिति भावः बाहुलतां भुजवल्लीं वेष्टनसाधर्म्यात् बाहौ लतात्वारोपः। कण्ठे शिथिलं नतु गाढं यथा तथा निवेश्य यस्य राक्षसस्य उद्यमाशङ्किनी उद्योगभीता अत एव विवृत्तानना पराङ्मुखी सती बलात् स्वयं पत्यैवेति शेषः स्कन्धे निहितया अर्पितयापि मुहुः पुनः पुनः अङ्के क्रोड़देशे पतन्त्या दक्षिणया

प्रकाशम्। जअदु जअदु, अमच्चो (१३)।

राक्ष। विलोक्य। अये विराध! इत्यर्द्धोक्ते विरुद्धस्मृतिः। प्रियंवदक! भुजङ्गैरिदानीं विनोदयामः, तद्विश्रम्यतां परिजनेन, त्वमपि स्वमधिकारमशून्यं कुरु (ञ)।

प्रियं। जं अमच्चो आणवेदि त्ति (१४)। सपरिवारो निष्क्रान्तः।

राक्ष। सखे! विराधगुप्त! इदमासनमास्यताम्।

विरा। यदाज्ञापयत्यमात्य इति। नाट्येनोपविष्टः।

राक्ष। सखेदं निर्वर्ण्य। अहो देवपादपद्मोपजीविनो जनस्येयमवस्था इति। रोदिति।

विरा। अमात्य! अलं शोकेन, नातिचिरादमात्योऽस्मान् नूनं पुरातनीमवस्थामारोपयिष्यति।

राक्ष। सखे! विराधगुप्त! वर्णयेदानीं कुसुमपुरवृत्तान्तम्।

---

(१३) जयतु जयतु अमात्यः।
(१४) यदमात्य आज्ञापयतीति।

---

बाहुलतया इति शेषः हेतुभूतया यत् गाढ़ालिङ्गनं तस्य सङ्गेन यत् पीड़ितं पीड़नं तेन सुखं यत्र तत् यथा तथा, अधुनापि मौर्य्यस्य चन्द्रगुप्तस्य उरसि वक्षसि वामेतरं दक्षिणं स्तनं न कुरुते भयेन गाढ़ालिङ्गनासम्भवात्। शार्दूलविक्रीड़ितं वृत्तम्।

(ञ) विरुद्धस्मृतिः जातस्मरणः। अशून्यं कुरु प्रतिपालय इत्यर्थः।

विरा । अमात्य ! विस्तीर्णः कुसुमपुरवृत्तान्तस्तदा-ज्ञापय कुतः प्रभृति कथयामि ।

राच । सखे ! चन्द्रगुप्तस्य तावन्नगरप्रवेशात् प्रभृति, मत्प्रणिधिभिः [मत्प्रयुक्तैः] तीक्ष्णरसदायिभिः किमनुष्ठितमित्यादितः श्रोतुमिच्छामि ।

विरा । एष कथयामि । अस्ति तावच्छकयवनकिरात-काम्बोजपारसीकवाह्लीकप्रभृतिभिश्चाणक्यमतिपरिगृहीतैश्चन्द्रगुप्तपर्वतेश्वरबलैरुदधिभिरिव, प्रलयकालचलित-सलिलसञ्चयैः, समन्तादुपरुद्धं कुसुमपुरम् ।

राच । शस्त्रमाकृष्यससम्भ्रमम् । मयि स्थिते, कः कुसुमपुर-मवरोत्स्यति ? प्रवीरक ! प्रवीरक ! क्षिप्रमिदानीम्—

प्राकारान् परितः शरासनधरैः क्षिप्रं परिक्षिप्यतां,
द्वारेषु द्विरदैः परद्विपघटाभेदक्षमैः स्थीयताम् ।
मुक्त्वा मृत्युभयं प्रहर्तुमनसः शत्रोर्बले दुर्बले,
ते निर्यान्तु, मया सहैकमनसो, येषामभीष्टं यशः ॥ १२ ॥

---

(१२) प्राकारानिति । प्राकारान् प्राचीरान् परितः सर्वतः शरासन-धरैः शरा अस्यन्ते क्षिप्यन्ते अनेनेति शरासनं धनुः तद्धरैः धानुष्कैः क्षिप्रं क्षेपणीयम् आशुगं वा अस्त्रं परिक्षिप्यताम् । श्लोकेऽत्र क्षिप्रमिति पदं न क्रियाविशेषणं पूर्वोक्ते गद्ये तत्पदप्रयोगादिह बोद्धव्यम् । परद्विपघटाभेदक्षमैः शत्रुपक्षीयहस्तिसमूहनिवारणक्षमैः द्विरदैः हस्तिभिः द्वारेषु स्थीयतां प्राचीरात् अस्त्रक्षेपणेन पुरद्वारेषु प्रबल-हस्तिवृन्दरक्षणेन शत्रूणां पुरप्रवेशाशक्यत्व इति भावः । किञ्च येषां यशः अभीष्टम् अभिलषितं ये यशःप्रार्थिन इत्यर्थः ते मृत्युभयं त्यक्त्वा

विरा। अमात्य! अलमावेगेन, वृत्तमिदं वर्ण्यते।

राक्ष। कथं वृत्तमिदम्, मया पुनर्ज्ञातं स एव कालो वर्त्तत इति। शस्त्रमुत्सृज्य सास्रं। हा देव नन्द! स्मरति ते राक्षसः प्रसादानां यस्त्वेवंविधे काले

यत्रैषा मेघनीला चलति गजघटा, राक्षसस्तत्र यायात्
एतत् पारिप्लवाम्भःप्लुति तुरगबलं धार्य्यतां राक्षसेन।
पत्तीनां राक्षसोऽ(न्तं नं) [न्तर्न]यतु बलमिति प्रेषयन्मह्यमाज्ञा
मज्ञासीः स्नेहयोगात् स्थितमिह नगरे राक्षसानां सहस्रम् १४

ततस्ततः।

विरा। ततः समन्तादुपरुद्धं पुष्पपुरमवलोक्य, बहुदिव-

---

मया सह एकमनसः अभिन्नमतयः अत एव प्रहर्तुं मनो येषां तादृशाः सुयुत्सवः सन्तः शत्रोः दुर्बले बलहीने पराक्रमकौशलाद्यभावात् सुजये इत्यर्थः वर्त्मे नियान्तु, पुरादिति शेषः प्रविशन्तु इत्यर्थः। शार्दूलविक्रीडितं छन्दः।

(१४) यत्रेति। यत्र रणप्रदेशे एषा मेघनीला मेघवत् श्यामला गजघटा हस्तिवृन्दं चलति तत्र राक्षसः यायात् गच्छतु। पारिप्लवं चञ्चलं यत् अम्भः जलं तस्यैव प्लुतिः गतिविशेषो यस्य तादृशं तुरगबलम् अश्वसैन्यं राक्षसेन धार्य्यताम् अवलम्ब्यताम्। राक्षसः पत्तीनां पदातीनां बलस्य अन्तं नाशं नयतु प्रापयतु। [अन्तरिति पाठे पत्तीनां शत्रुपदातीनाम् अन्तः मध्ये बलं स्वबलं सैन्यं नयतु प्रापयतु] इति एवंप्रकारेण मह्यं मां प्रति इत्यर्थः आज्ञां प्रेषयन् स्नेहयोगात् इह नगरे राक्षसानां सहस्रं स्थितम् अज्ञासीः बहुलकार्य्यकारितया मां राक्षससहस्रमिव सम्भावितवानित्यर्थः। स्रग्धरावृत्तम्।

सम्प्रवृत्ते महदुपरोधवैशसमुपरि (ट) पौराणां प्रतिवर्त्त-मानमसहमाने, तस्यामवस्थायां, पौरजनापेक्षया, सुरङ्गा-मुपेत्यापक्रान्ते तपोवनाय देवे सर्वार्थसिद्धौ, स्वामिविर-हात् सुशिथिलीकृतप्रयत्नेषु युष्मद्बलेषु, जयघोषणाव्या-(ण्या)घातादिसाहसानुमितान्तर्नगरवासेषु (ठ) पुनरपि नन्दराज्यप्रत्यानयनाय सुरङ्गामधिगतेषु युष्मासु, चन्द्रगुप्त-निधनाय युष्मत्प्रयुक्तया विषकन्यया घातिते तपस्विनि (ड) पर्वतेश्वरे।

राक्ष। सखे! पश्याश्चर्य्यम्।

कर्णेनेव विषाङ्गनैकपुरुषव्यापादिनी रक्षिता,

हन्तुं शक्तिरिवार्जुनं बलवती, या चन्द्रगुप्तं मया।

सा विष्णोरिव विष्णुगुप्तहतकस्यात्यन्तिकश्रेयसे

हैडिम्बेयमिवेत्य पर्वतनृपं तद्बध्यमेवावधीत्॥ १५॥

---

(ट) उपरोधवैशसम् उपरोधेन वैशसम् अत्याचाररूपम्।

(ठ) जयघोषणाव्याघातादिसाहसानुमितान्तर्नगरवासेषु जयघोषणा मौर्य्यस्येति शेषः तस्याः व्याघातः विरुद्धाचरणम् आदिर्येषां तैः साहसैः बलकृतकार्य्यैः अनुमितः शत्रुभिरित्यर्थात् गम्यते। अन्तर्नगरवासः नगरमध्यावस्थानं येषां तादृशेषु युष्मास्वित्यस्य विशेषणम्।

(ड) तपस्विनि वराके निरपराधिनीत्यर्थः।

(१५) कर्णेनेति। कर्णेनेव मया अर्जुनमिव चन्द्रगुप्तं हन्तुं बलवती एकपुरुषव्यापादिनी एकपुरुषघातिनी शक्तिरिव या विषकन्या रक्षिता सा विष्णोरिव कृष्णस्येव विष्णुगुप्तहतकस्य चाणक्यहतकस्य आत्यन्तिक-श्रेयसे सर्वाधिकमङ्गलायेत्यर्थः तद्बध्यं तस्य विष्णोर्बध्यं पक्षे चाणक्यस्य बध्य-मेव हैडिम्बेयमिव हिडिम्बातनयं घटोत्कचमिव पर्वतनृपम् इत्य

विरा। अमात्य! दैवस्यात्र कामचारः, किमत्र क्रियते।

राक्ष। ततस्ततः।

विरा। ततः पितृवधपरित्रासादपक्रान्ते कुसुमपुरात् कुमारे मलयकेतौ, विश्वासिते च पर्वतकभ्रातरि वैरोध-(च)के, प्रकाशिते च चन्द्रगुप्तस्य नन्दभवनप्रवेशे, चाणक्य-हतकेन आहूयाभिहिताः कुसुमपुरनिवासिनः सर्वे एव सूत्रधाराः, यथा सांवत्सरिकवचनादद्यैवार्धरात्रसमय एवा-भिमतश्चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति, ततः प्रथमद्वारात् प्रभृति संस्क्रियतां राजभवनमिति। ततः सूत्रधारैरभिहितम्, आर्य्य! प्रथममेव देवस्य चन्द्रगुप्तस्य नन्दभवनप्रवेशमुपलभ्य, सूत्रधारेण दारुवर्मणा कनक-तोरणन्यासादिभिः संस्कारविशेषैः संस्कृतं प्रथमराज-द्वारम्, इदानीमस्माभिरभ्यन्तरे संस्कारो विधेय इति। ततश्चाणक्यबटुना, अनादिष्टेनैव दारुवर्मणा संस्कृतं राज-भवनद्वारमिति परितुष्टेन, दारुवर्मणः सुचिरं दाक्ष्य-मभिनन्द्याभिहितम् (ढ) अचिरादस्य दाक्ष्यस्यानुरूपं फलं दारुवर्माधिगमिष्यति।

---

प्राप्य अवधीत्। रात्रियुद्धे अतिविक्रान्तं घटोत्कचं कथमपि वार-यितुमशक्नुवन् कर्णः अर्जुनवधार्थं रक्षितया एकपुरुषघातिन्या शक्त्या निहतवानिति महाभारतीयकथानानुसंधया। शार्दूलविक्रीडितं वृत्तम्।

(ढ) सांवत्सरिकवचनात् दैवज्ञवचनात्। उपलभ्य ज्ञात्वा। दाक्ष्यं नैपुण्यम्।

राक्ष। सोद्वेगम्। सखे! कुतश्चाणक्यवटोः परितोषः, अफलमनिष्टफलं वा दारुवर्म्मणः प्रयत्नमवगच्छामि। यद्नेन बुद्धिमोहात्, अथवा राजभक्तिप्रकर्षात्, [नियोग] कालमप्रतीक्षमाणेन, सञ्जनितश्चाणक्यवटोश्चेतसि बलवान् विकल्पः (ण)। ततस्ततः?

विरा। ततश्चाणक्यहतकेनानुकूललग्नवशादर्द्धरात्रसमये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति, शिल्पिनः पौरांश्च गृही[तार्थान्]तसमयान् कृत्वा, तस्मिन्नेव क्षणे पर्वतेश्वरभ्रातरं वैरोध[च]कमेकासने चन्द्रगुप्तेन सहोपवेश्य, कृतः पृथ्वीराज्यार्द्धभागः।

राक्ष। किञ्चातिसृष्ट [ष्टः] (त) पर्वतेश्वरभ्रात्रे वैरोध[च]काय पूर्वप्रतिश्रुतं [तः] राज्या[र्द्धभागः]र्द्धमिति।

विरा। अमात्य! अथ किम्।

राक्ष। आत्मगतम्। नियतमतिधूर्त्तवटुना तस्यापि तपस्विनः कमप्युपांशुवधमाकलय्य पर्वतेश्वरविनाशजनितस्याशसः परिहारार्थमेषा लोकप्र[सिद्धिः]तिपत्तिरुपचरिता (थ)। प्रकाशम्। ततस्ततः?

---

(ण) विकल्पः संशयः।

(त) अतिसृष्टं दत्तम्।

(थ) उपांशुवधं रहस्यहननम्। आकलय्य अवधार्य्य। उपचरिता कल्पिता।

भिरा। ततः प्रथममेव प्रकाशीकृते चन्द्रगुप्तस्यार्द्धरात्रे नन्दभवनप्रवेशे, कृताभिषेके च वैरोध(च)के, हिमविमल-मुक्तागुणपरिक्षेपोपरचितपटुवारवाणप्रच्छादितशरीरे, (द) मणिमयमुकुटपटुबन्धनिविड़नियतकाचिरतरमौलौ, सुरभि-कुसुमदामवैकक्षिकावभासितवक्षःस्थले, (ध) परिचितदर्शने-ष्वनभिज्ञायमाने, नृपाकृतौ (न) चाणक्यहतकस्याज्ञया चन्द्रगुप्तोपवाह्यां (प) चन्द्रलेखाभिधानां नागवशामारुह्य, (फ) चन्द्रगुप्तानुयायिना राजलोकेनानुगम्यमाने, जवेन देवस्य नन्दस्य भवनं प्रविशति वैरोध(च)के, युष्मत्प्रयुक्तेन सूत्र-धारेण दारुवर्म्मणा, चन्द्रगुप्तोऽयमिति मन्यमानेन वैरोध-(च)कस्योपरि निपातनाय सज्जीकृतं यन्त्रतोरणम् (ब)। अत्रान्तरे, बहिर्निगृहीतवाहनेषु स्थितेषु चन्द्रगुप्तानुयायिषु भूमिपालेषु युष्मत्प्रयुक्तेनैव चन्द्रगुप्तनिशादिना वर्वरकेण,

---

(द) हिम इव विमलः स्वच्छः मुक्तागुणः मुक्ताहारः तस्य परिक्षेपः शोभार्थं परितः प्रदानं तेन उपरचितः निर्मितः पटुः उज्ज्वलः यो वारवाणः वर्म तेन प्रच्छादितं शरीरं यस्य तादृशे।

(ध) सुरभि यत् कुसुमदाम पुष्पमाल्यं तदेव वैकक्षिकं यज्ञोपवीतवत् तिर्य्यग्लम्बी हारः तेन अवभासितं शोभितं वक्षःस्थलं यस्य तादृशे।

(न) नृपाकृतौ चन्द्रगुप्तवत् अभिज्ञायमाने इत्यर्थः।

(प) चन्द्रगुप्तोपवाह्यां चन्द्रगुप्तः उपवाह्यः यस्याः चन्द्रगुप्त-वाहिनीमित्यर्थः।

(फ) नागवशां नागस्य वशा तां हस्तिनीमित्यर्थः।

(ब) यन्त्रतोरणं तोरणरूपेण निर्मितं यन्त्रमित्यर्थः।

कनकदण्डान्तर्निहितामसिपुत्त्रिकामाक्रष्टुकामेनावलम्बिता करेण, कनकशृङ्खलामुखावलम्बिनी कनकदण्डिका (भ)।

राक्ष । उभयोरप्यस्थाने यत्नः । ततस्ततः ?

विरा । अथ जवनाभिघातमुत्प्रेक्षमाणा गजवधूरतिजवनतया गत्यन्तरमारूढवती (म)। ततः प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन भ्रष्टलक्ष्यं पतता यन्त्रतोरणेनाक्रष्टकृपाणीको व्यग्रपाणिरनासाद्यैव चन्द्रगुप्तप्रत्याशया वैरोध(च)कं, दारुवर्म्मणा हतस्तपस्वी वर्वरकः। ततो दारुवर्म्मणा, यन्त्रतोरणपातमात्मविनाशफलमवधार्य्य शीघ्रमेवोत्तुङ्गतोरणस्थानमारूढेन, यन्त्रघटनबीजलोहकीलकमादाय (य) हस्तिनीगत एव हतस्तपस्वी वैरोध(च)कः।

राक्ष । हा कष्टमनर्थद्वयमापतितम् । न हतश्चन्द्रगुप्तोऽसौ, हतौ वैरोध(च)कवर्वरकौ । सावेगमात्मगतम् । नैतावुभौ हतौ, दैवेन वयमेव हताः । प्रकाशम् । अथ स सूत्रधारो दारुवर्म्मा क्व ?

---

(भ) असिपुत्रिकां छुरिकामित्यर्थः । कनकशृङ्खला स्वर्णहारः मुखावलम्बिनी मुखे लम्बमाना यस्याः तादृशी । कनकदण्डिका स्वर्णयष्टिः ।

(म) उत्प्रेक्षमाणा आशङ्कमाना । अतिजवनतया अतिवेगेन । गत्यन्तरम् अन्यां गतिं त्वरितगतिमित्यर्थः । आरूढवती आश्रिता ।

(य) प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन प्रथमा या गतिः मन्दगतिरित्यर्थः तदनुरोधेन प्रत्याकलितं धृतं मुक्तञ्च तेन । भ्रष्टलक्ष्यं भ्रष्टं अतिक्रान्तं लक्ष्यं यत्र तत् यथा तथा । व्यग्रपाणिः प्रहारार्थमुद्यतकर[illegible] [illegible] हेतुभूतं लोहकीलकम् ।

विरा। वैरोध(च)कपुरःसरैः पदातिलोकैर्लोष्टघातं हतः।

राक्ष। साश्रम्। कष्टं भोः कष्टम्। अहो वत्सलेन सुहृदा दारुवर्म्मणा वियुक्ताः स्मः। अथ, तेन तत्र भिषजा अभयदत्तेन किमनुष्ठितम्?

विरा। अमात्य! सर्वमनुष्ठितम्।

राक्ष। सहर्षम्। अपि नाम सखे! हतश्चन्द्रगुप्तहतकः?

विरा। अमात्य! दैवान्न हतः।

राक्ष। सविषादम्। तत् किमिदानीं कथयसि परितुष्टः सर्वमनुष्ठितमिति?

विरा। अमात्य! कल्पितमनेन विषचूर्णमिश्रमौषधं चन्द्रगुप्ताय। तच्च प्रत्यक्षीकुर्वता चाणक्यहतकेन कनकभाजने वर्णान्तरमुपगतमुपलभ्याभिहितश्चन्द्रगुप्तः, वृषल! वृषल! सविषमौषधं, न पातव्यमिति।

राक्ष। शठः खल्वसौ वटुः। अथ स वैद्यः कथम्?

विरा। स खलु वैद्यस्तदेवौषधं पायित उपरतश्च।

राक्ष। सविषादम्। अहह! महान् विज्ञानराशिरुपरतः। भद्र! अथ तस्य शयनाधिकृतस्य प्रमोदकस्य किं वृत्तम्?

विरा। आत्मविनाशः।

राक्ष। सोद्वेगम्। कथमिव?

विरा। स खलु मूर्खस्तं युष्माभिरतिसृष्टं महान्तमर्थराशिमवाप्य, महता व्ययेनोपभोक्तुमारब्धवान्। ततः कुतोऽयं भूयान् धनागमस्तवेति पृच्छ्यमानोऽयं, यदा

वाक्यभेदान् (र) बहूनकथयत् तदा चाणक्यहतकादेशाद्वि-चित्रेण वधेन व्यापादितः ।

राच । सोद्वेगम् । कथमत्रापि वयमेवोपहता दैवेन । अथ, शयितस्य चन्द्रगुप्तस्य शरीरे प्रहर्त्तुमस्मत्प्रयुक्तानां नरपतिशयनगृहस्यान्तःसुरङ्गायां निवसतां, बीभत्सका-दीनां, को वृत्तान्तः ?

विरा । अमात्य ! दारुणो वृत्तान्तः ।

राच । सावेगम् । कथं दारुणो वृत्तान्तः ? न खलु (ल) विदितास्ते तत्र निवसन्तश्चाणक्यहतकेन ?

विरा । अथ किम् ।

राच । कथमिव ?

विरा । प्राक् चन्द्रगुप्तप्रवेशात् प्रविष्टमात्रेणैव शयन-गृहे चाणक्येन दुरात्मना समन्तादवलोकिते, ततस्त्वेक-स्माद्भित्तिच्छिद्रात्, गृहीतभक्तावयवानां पिपीलिकानां पङ्क्तिम् [गृहीतभक्तावयवां निष्क्रामन्तीं पिपीलिकाम्] अवलोक्य, पुरुषगर्भमेतद्गृहमिति गृहीतार्थेन दाहितं तदन्तःशयनगृहम् । तस्मिंश्च दह्यमाने धूमावरुद्धदृष्टिविषयाः प्रथममपिहितनिर्गमनमार्गमनधिगम्य [अनुपलभ्य द्वारम्] सर्व एव बीभत्सादयस्तत्रैव ज्वलनमुपगता उपरताश्च ।

राच । सास्रम् । सखे ! पश्य, चन्द्रगुप्तस्य दैवसम्पदा

---

(र) वाक्यभेदान् परस्परविरोधीनि वचनानि इत्यर्थः ।

(ल) न खलु इति प्रश्नार्थमव्ययम् ।

सर्वं एव उपरताः। सचिन्तम्। सखे! दैवसम्पदं पश्य दुरात्मनश्चन्द्रगुप्तहतकस्य। कुतः,

कन्या तस्य वधाय या विषमयी गूढं प्रयुक्ता मया,
दैवात् पर्वतकस्तया विनिहतो, यस्तस्य राज्यार्द्धभाक्।
ये यन्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिताः,
मौर्य्यस्यैव फलन्ति, पश्य, विविधश्रेयांसि मे नीतयः ॥ १६॥

विरा। अमात्य! तथापि प्रारब्धमपरित्याज्यमेव। पश्यत्वमात्यः,

प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्ननिहता विरमन्ति मध्याः।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति ॥ १७ ॥

---

(१६) कन्येति। मया तस्य चन्द्रगुप्तस्य वधाय या विषमयी कन्या गूढं प्रयुक्ता प्रेषिता, दैवात् भाग्यवशात् तया यः तस्य राज्यार्द्धभाक् परिपणितार्द्धराज्याधिकारी पर्वतकः स एव विनिहतः व्यापादितः। ये दारुवर्मादयः यन्त्रेषु च रसेषु च प्रणिहिताः मयेति शेषः तैः यन्त्रविषादिभिरेव ते हताः, अतः पश्य मे नीतयः उपायाः मौर्य्यस्यैव विविधश्रेयांसि प्रभूतानि मङ्गलानि फलन्ति जनयन्ति। शार्दूलविक्रीड़ितं वृत्तम्।

(१७) प्रारभ्यत इति। नीचैः क्षुद्रैः विघ्नभयेन न खलु नैव प्रारभ्यते कार्य्यमिति शेषः, मध्याः प्रारभ्य विघ्नेन नि[illegible]ताः सन्तः विरमन्ति प्रारब्धं त्यजन्तीत्यर्थः, उत्तमगुणा महान्तः [illegible] विघ्नैः पुनः पुनः प्रतिहन्यमाना अपि प्रारब्धम् उद्वहन्ति न त्य[illegible]न्तीत्यर्थः। वसन्ततिलकं वृत्तम्।

अपि च,

किं शेषस्य भरव्यथा न वपुषि, क्ष्मां न क्षिपत्येष यत्,
किंवा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः।
किं त्वङ्गीकृतमुत्सृजन् कृपणवत् श्लाघ्यो जनो लज्जते,
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम्॥ १८॥

राच। सखे! प्रारब्धमपरित्याज्यमिति प्रत्यक्षमितङ्ग-वतः। ततस्ततः?

विरा। ततः प्रभृति चाणक्यहतकश्चन्द्रगुप्तस्य शरीरे, सहस्रगुणमप्रमत्तः, एभ्य एव ईदृशं भविष्यतीति, अन्विष्य अन्विष्य निगृहीतवान् कुसुमपुरनिवासिनो नन्दामात्य-पुरुषान्।

राच। सावेगम्। वयस्य! अथ, के के निगृहीताः?

विरा। अमात्य! आदावेव तावत् क्षपणको जीव-सिद्धिः सनिकारं नगरान्निर्वासितः।

---

(१८) किं शेषस्येति। शेषस्य अनन्तस्य वपुषि भरव्यथा भूभारण-जनितक्लेशः किं न भवति अपितु भवत्येव किन्तु एषः शेषः क्ष्मां पृथिवीं न क्षिपति न त्यजतीति यत्, दिनपतेः सूर्य्यस्य परिश्रमः किं नास्ति अपितु अस्त्येव तथापि निश्चलः न आस्ते न तिष्ठतीति यत्, श्लाघ्यः महान् जनः कृपणवत् क्षुद्रेण तुल्यं यथा तथा अङ्गी-कृतम् उत्सृजन् त्यजन् किं न लज्जते अपितु लज्जत एवेति यत्, एतत् प्रतिपन्नवस्तुषु अङ्गीकृतविषयेषु निर्वाहः प्रतिपालनं सतां साधूनां गोत्रव्रतं कुलाचारः। साधवः कथमपि अङ्गीकृतं न त्यज-न्तीत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

राक्ष। आत्मगतम्। एतावत् सह्यं, न निष्परिग्रहं (व) स्थानपरिभ्रंश: पीडयिष्यति। प्रकाशम्। सखे! कमपराधमुद्दिश्य निर्वासित एष: ?

विरा। एष दुरात्मा राक्षसप्रयुक्तया विषकन्यया पर्वतेश्वरं घातितवानिति।

राक्ष। स्वगतम्। साधु कौटिल्य! साधु।

परिहृतमयश: पातितमस्मासु च, घातितोऽर्धराज्यहर:।
एकमपि नीतिबीजं बहुफलतामेति यस्य तव ॥ १९ ॥

प्रकाशम्। ततस्तत: ?

विरा। ततश्चन्द्रगुप्तशरीरमभिद्रोग्धुमनेन व्यापारिता दारुवर्म्मादय इति नगरे प्रख्याप्य, शकटदास: शूलमारोपित:।

राक्ष। साम्रम्। हा सखे! शकटदास! अयुक्तस्तवायमीदृशो मृत्यु:। अथवा, स्वाम्यर्थमुपरतो न शोच्यस्त्वमसि। वयमेवात्र शोच्या ये नन्दकुलविनाशेऽपि जीवितुमिच्छाम:।

विरा। अमात्य! नैतदेवं, स्वाम्यर्थ एव साधयितव्य:।

राक्ष। सखे!

---

(व) निष्परिग्रहं परिवाररहितमित्यर्थ:।

(१९) परिहृतमिति। अयश: पर्वतेश्वरवधजनितमिति शेष: अकीर्त्ति: अस्मासु पातितं संक्रामितम् अर्द्धराज्यहर: परिपणितराज्यार्द्धभागी पर्वतेश्वर इति शेष: घातित: नाशितश्च यस्य तव एकमपि नीतिबीजं क्षपणकनिर्वासनरूपं बहुफलतां पूर्वोक्तफलत्रयाधायकताम् एति प्राप्नोति त्रिविधं फलं जनयतीत्यर्थ:। आर्य्यावृत्तम्।

अस्माकममुमेवार्थमवलम्ब्य जिजीविषा ।
परलोकगतो देवः कृतघ्नैर्नानुगम्यते ॥ २० ॥

विरा । अमात्य ! नैतदेवम् । अस्माकममुमेवार्थमित्यादि पुनः पठति (अ) ।

राक्ष । सखे ! कथ्यताम्, अपरस्यापि सुहृद्व्यसनश्रुतस्य श्रवणे सज्जा वयम् ।

विरा । तत एतदुपलभ्य, चन्दनदासेनोपरूढसाध्वसेनापवाहितममात्यकलत्रम् (ब) ।

राक्ष । सखे ! क्रूरस्य चाणक्यवटोर्विरुद्धमनुष्ठितं चन्दनदासेन ।

विरा । अमात्य ! नन्वयुक्ततरः सुहृद्द्रोहः ।

राक्ष । ततस्ततः ?

---

(२०) अस्माकमिति । अमुमेव स्वाम्यर्थमेव स्वामिकार्य्यवैरनिर्य्यातनरूपमेवेत्यर्थः अवलम्ब्य आश्रित्य अस्माकं जिजीविषा जीवनेच्छा । तथापि न श्रेयसी प्रवृत्तिरित्याशयेनाह परलोक इति । कृतघ्नैः कृतोपकारानभिज्ञैः जनैः परलोकगतः देवः न अनुगम्यते नानुम्रियते । अनुष्टुप्वृत्तम् ।

(अ) नैतदेवम् अस्माकममुमेवार्थमित्यत्र कृतघ्नैरिति पदं कृतज्ञैरित्यनेन परिवर्त्त्य पठति । कृतज्ञास्तत्कार्य्यसाधनेनैव तत्परितोषो भवेदित्याशयेन वृथा तदनुगमनमिति मन्यन्ते इति भावः । पाठपरिवर्त्तनाकरणे कृतघ्नैरित्यत्र इत्यादिपदाध्याहारः कर्त्तव्यः । स च न समीचीनतया प्रतिभाति ।

(ब) उपरूढसाध्वसेन सञ्जातत्रासेन । अपवाहितं स्थानान्तरं प्रापितम् ।

विरा। ततो याच्यमानेनापि यदा न समर्पितमनेनामात्यकलत्रं ततः कुपितेन चाणक्यवटुना।

राक्ष। स खलु व्यापादितः।

विरा। अमात्य ! न खलु व्यापादितः, किन्तु गृहीतगृहसारः सपुत्रकलत्रः संयम्य, बन्धनागारे निक्षिप्तः।

राक्ष। ततः किं परितुष्टः कथयसि, अपवाहितमनेन राक्षसकलत्रमिति, ननु वक्तव्यं, संयतः सकलत्रो राक्षस इति।

प्रविश्य पटाक्षेपेण (स) पुरुषः। जअदु जअदु, अज्जो। अज्ज ! एसो क्खु सअड़दासो पड़िहारभूमिमुवत्थिदो (१५) (ह)।

राक्ष। प्रियंवदक ! अपि सत्यम् ?

प्रियं। अलिअं किं अमच्चपादोपजीविणो मन्तिदुं जाणन्ति (१६) ?

राक्ष। सखे ! विराधगुप्त ! किमेतत् ?

विरा। अमात्य ! रक्षति खलु भव्यं भवितव्यता।

---

(१५) जयतु, जयतु आर्य्यः। आर्य्य ! एष खलु शकटदासः प्रतिहारभूमिमुपस्थितः।

(१६) अलीकं किम् अमात्यपादोपजीविनो मन्त्रयितु जानन्ति ?

---

(स) पटाक्षेपेण पटस्य जवनिकारूपस्य अक्षेपेण क्षेपम् उत्तोलनं विनैव तत्पार्श्वदेशेनेत्यर्थः।

(ह) प्रतिहारभूमिं द्वारदेशम्।

राक्ष। प्रियंवदक ! यद्येवं तत् किं चिरयसि ? क्षिप्रं प्रवेशय तम्।

प्रियं। जं अमच्चो आणवेदि त्ति (१७)। निष्क्रान्तः।

ततः प्रविशति सिद्धार्थकेनानुगम्यमानः शकटदासः।

शक। दृष्ट्वा चात्मगतम्।

दृष्ट्वा मौर्य्यमिव प्रतिष्ठितपदं शूलं धरित्रीतले
तल्लक्ष्मीमिव चेतसः[ना]प्रमथिनीमुन्मुच्य बध्यस्रजम्।
श्रुत्वा स्वाम्युपरोधरौद्रविषमानाघ्राततूर्य्यस्वनान्
न ध्वस्तं प्रथमाभिघातकठिनं मन्ये मदीयं मनः ॥२१॥

नाट्येनावलोक्य सहर्षम्। अयममात्यराक्षसस्तिष्ठति, य एषः,

अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन्।
पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः ॥ २२ ॥

---

(१७) यदमात्य आज्ञापयति इति।

---

(२१) दृष्ट्वेति। धरित्र्यास्तले भूमौ मौर्य्यं चन्द्रगुप्तमिव प्रतिष्ठितपदं लब्धप्रतिष्ठं स्थापितमूलञ्च शूलं मदर्थमिति शेषः दृष्ट्वा तल्लक्ष्मीं तस्य चन्द्रगुप्तस्य लक्ष्मीमिव चेतसः प्रमथिनीं चित्तविदारिणीं बध्यस्रजं बध्यचिह्नभूतां मालाम् उन्मुच्य परिधाय, स्वाम्युपरोधरौद्रविषमान् स्वामिनः नन्दस्य उपरोधेन हिंसनेन रौद्रान् घोरान् विषमान् असह्यान् आघ्राततूर्य्यस्वनान् घोषणावाद्यशब्दान् श्रुत्वा मदीयं मनः प्रथमाभिघातकठिनं प्रथमाभिघातेन स्वामिवधरूपताडनेन कठिनम्, अत एव न ध्वस्तं न खण्डितं मन्ये। शार्दूलविक्रीडितं वृत्तम्।

(२२) अक्षीणभक्तिरिति। नन्दे क्षीणेऽपि अक्षीणभक्तिः स्वाम्यर्थं

उपसृत्य। जयत्वमात्यः।

राक्ष। नाट्येनावलोक्य सहर्षम्। सखे! शकटदास! दिष्ट्या कौटिल्यगोचरगतोऽपि दृष्टोऽसि, तत् परिष्वजस्व माम्।

शक। तथा करोति।

राक्ष। तं परिष्वज्य। इदमासनमास्यताम्।

शक। यदाज्ञापयत्यमात्यः। इति नाट्येनोपविष्टः।

राक्ष। सखे! शकटदास! अथ कोऽयमस्य मे हृदयानन्दस्य हेतुः?

शक। सिद्धार्थकं निर्दिश्य। अमात्य! प्रियसुहृदा सिद्धार्थकेन घातकान् विद्राव्य (च) वध्यस्थानादपवाहितोऽस्मि।

राक्ष। सहर्षम्। भद्र! सिद्धार्थक! काममपर्य्याप्तमिदमस्य प्रियस्य, तथापि गृह्यताम्। इति स्वगात्रादवतार्य्य भूषणानि प्रयच्छति।

सिद्धा। गृहीत्वा पादयोर्निपत्य स्वगतम्। एदं क्खु अज्जोवदेसेण (क) करिस्सं। प्रकाशम्। अमच्च! एत्थ मे पढमप्पविट्ठस्स णत्थि कोवि परिचिदो, जहिं एदं अमच्चस्स प्पसादं

---

स्वामिकार्य्यवैरनिर्य्यातनरूपम् उद्दहन् साधयन् पूर्य्यिव्यां स्वामिभक्तानां परमे प्रमाणे दृष्टान्ते स्थितः। यत्तु‌ट पृहत्तम्।

(च) विद्राव्य ताड़यित्वा।

(क) आर्य्योपदेशेन आर्य्यस्य चाणक्यस्य उपदेशेन आदेशेन तदनुसारेणेत्यर्थः।

णिक्खिविअ णिव्वुदो भविस्सं. ता इच्छामि अहं इमाए मुद्दिआए मुद्दिदं अमच्चस्स ज्जेव भाण्डागारे णिक्खिविदुं, जदा मे एदिणा पओअणं भविस्सदि, तदा गेह्निस्सं (१८)।

राक्ष। भद्र! भवतु, को दोषः [भारः]। शकटदास! एवं क्रियताम्।

शक। यदाज्ञापयत्यमात्य इति। मुद्रां विलोक्य जनान्तिकम्(ख) अमात्य! भवन्नामाङ्कितेयं मुद्रा।

राक्ष। विलोक्य सविषादं सवितर्कमात्मगतम्। कष्टं, मदुत्कण्ठाविनोदार्थं नगरान्निष्क्रामतो मम हस्ताद् ब्राह्मण्या गृहीता, तत् कथमस्य हस्तमुपगता? प्रकाशम्। भद्र! सिद्धार्थक! कुतस्त्वयेयमधिगता?

सिद्धा। अमच्च! अत्थि कुसुमपुरणिवासी मणिआरसेट्ठी चन्दणदासो णाम। तस्स गेहदुआरे भूमिए पडिदा, मए समासादिदा [लद्धा] (१९)।

---

(१८) इदं खलु आर्य्योपदेशेन करिष्यामि। अमात्य! अत्र मे प्रथमप्रविष्टस्य नास्ति कोऽपि परिचितः, यत्रेमम् अमात्यस्य प्रसादं निक्षिप्य निर्वृतो भवामि; तस्मादिच्छाम्यहम् एतया मुद्रया मुद्रितममात्यस्यैव भाण्डागारे निक्षेप्तुम्; यदा ममैतेन प्रयोजनं भविष्यति, तदा ग्रहीष्यामि।

(१९) अमात्य! अस्ति कुसुमपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम। तस्य गेहद्वारे निपतिता, मया समासादिता। पाठान्तरे लब्धा।

---

(ख) जनान्तिकं कर्णे कर्णे "जनान्तिकन्तु तद् प्रोक्तं यत् तृतीयाश्रवणोपरम्" इति लक्षणात्।

राक्ष । युज्यते ।

सिद्धा । अमच्च ! किं एत्थ जुज्जदि ? (२०) ।

राक्ष । भद्र ! यतो महाधनानां द्वारि पतितस्यैवंविधस्योपलब्धिरिति ।

शक । सखे ! सिद्धार्थक ! अमात्यनामाङ्कितेयं मुद्रा, तदितो बहुतरेणार्थेन भवन्तममात्यस्तोषयिष्यति, तद्दीयतामेषा मुद्रा ।

सिद्धा । अज्ज ! एसो मे परितोषो, जं अमच्चो इमाए मुद्दाए परिग्गहप्पसादं करोदि त्ति (२१) । मुद्रां समर्पयति ।

राक्ष । सखे ! शकटदास ! अनयैव मुद्रया स्वाधिकारे व्यवहर्त्तव्यं भवता ।

शक । यदाज्ञापयत्यमात्य इति ।

सिद्धा । अमच्च ! विण्णवेमि किं पि (२२) ।

राक्ष । भद्र ! विस्रब्धं ब्रूहि ।

सिद्धा । जाणादि ज्जेव अमच्चो, जधा चाणक्कहदअस्स विप्पिअं कदुअ, णत्थि मे पुणो पाड़लिउत्ते प्पवेसो त्ति, ता इच्छामि अहं अज्जस्स ज्जेव सुप्पसण्णे पादे [चलणे] सेविदुं (२३) ।

---

(२०) अमात्य ! किमत्र युज्यते ?

(२१) आर्य ! एष मे परितोषो, यदस्या मुद्राया अमात्यः परिग्रहप्रसादं करोतीति ।

(२२) अमात्य ! विज्ञापयामि किमपि ।

(२३) जानात्येवामात्यो, यथा चाणक्यहतकस्य विप्रियं कृत्वा नास्ति

राक्ष । भद्र ! प्रियं नः, किन्तु त्वदभिप्रायपरिज्ञानेनान्तरितोऽस्माकमनुनयः (ग) । तदेवं क्रियताम् ।

सिद्धा । सहर्षम् । अणुग्गहिदोह्मि (२४) ।

राक्ष । सखे ! शकटदास ! विश्रामय सिद्धार्थकम् ।

शक । यदाज्ञापयत्यमात्य इति । सिद्धार्थकेन सह निष्क्रान्तः ।

राक्ष । सखे ! विराधगुप्त ! वर्णयेदानीं कुसुमपुरवृत्तान्तशेषम् । अपि क्षमन्ते कुसुमपुरनिवासिनोऽस्मदुपजापं (घ) चन्द्रगुप्तप्रकृतयः ?

विरा । अमात्य ! बाढं क्षमन्ते, ननु यथाप्रधानमनुगच्छन्त्येव (ङ) ।

राक्ष । सखे ! किं तत्र कारणम् ?

---

मे पुनः पाटलिपुत्रे प्रवेश इति ; तस्मादिच्छाम्यहम् अमात्यस्यैव सुप्रसन्नौ पादौ सेवितुम् । पाठान्तरे सुप्रसन्ने चरणे इति ।

(२४) अनुगृहीतोऽस्मि ।

---

(ग) त्वदभिप्रायपरिज्ञानेन तवाभिप्रायं परिज्ञाय अस्माकम् अनुनयः अन्तरितः तिरोहितः अस्माभिर्भवादृशं मित्रमनुनीय स्वनिकटे रक्षितुं यत्नः कर्त्तव्य आसीत्, स तु भवद्वचनेनैव अनायाससिद्धः संवृत्त इति भावः ।

(घ) अपि क्षमन्ते सहन्ते किम् ? अस्मदुपजापम् अस्माभिः कृतं परस्परभेदम् ।

(ङ) यथाप्रधानं प्रधानं राजा चन्द्रगुप्तः तन्मन्त्री चाणक्यश्च तदनतिक्रम्य तौ अपि परस्परभेदं प्राप्नुतः किं पुनरपरे राजपुरुषा इत्यर्थः । अनुगच्छन्ति परस्परभेदरूपं कार्यमनुसरन्तीत्यर्थः ।

विरा। अमात्य! इदं तत्र कारणं, मलयकेतोरपक्रमणात् प्रभृति पीड़ितश्चन्द्रगुप्तेन चाणक्य इति [कुपितश्चन्द्रगुप्तश्चाणक्यस्य] चाणक्योऽपि जितकाशितयाऽसहमानस्तैस्तैराज्ञाभङ्गैश्चन्द्रगुप्तस्य चेतसः पीड़ामुपचिनोति, (च) अयमपि ममानुभवः।

राक्ष। सहर्षम्। सखे! विराधगुप्त! तद्गच्छ त्वमनेनाहितुण्डिकच्छद्मना पुनः कुसुमपुरमेव। तत्र हि मे सुहृद्वैतालिकव्यञ्जनः (छ) स्तनकलसो नाम प्रतिवसति। स त्वया मद्वचनाद्वाच्यः, यथा चाणक्येन क्रियमाणेष्वाज्ञाभङ्गेषु चन्द्रगुप्तस्त्वया समुत्तेजनरूपैः श्लोकैरुपश्लोकयितव्य इति (ज)। कार्य्यञ्चातिनिभृतं करभकहस्तेन सन्देष्टव्यमिति।

विरा। यदाज्ञापयत्यमात्य इति। निष्क्रान्तः।

प्रविश्य पुरुषः। जअदु जअदु अमच्चो। अमच्च! सअडदासो विण्णवेदि, एदे क्खु तिण्णि अलङ्कारविसेसा विक्कीअन्ति, ता पच्चक्खीकरेदु अमच्चो (२५)।

---

(२५) जयतु जयतु अमात्यः। अमात्य! शकटदासो विज्ञापयति, एते खलु त्रयोऽलङ्कारविशेषा विक्रीयन्ते, तस्मात् प्रत्यक्षीकरोत्वमात्य इति।

---

(च) पीड़ितः विरक्तीकृतः। जितकाशितया जितेन विपक्षपराजयेन काशते स्पर्द्धते इति जितकाशी गर्वितः तस्य भावः तया। उपचिनोति जनयति।

(छ) वैतालिकव्यञ्जनः- प्रबोधकरव्यवसायी, यः निद्रितान् भूपतिप्रभृतीन् स्तुतिपाठादिना प्रातः प्रबोधयति।

(ज) उपश्लोकयितव्यः श्लोकेन स्तोतव्य इत्यर्थः।

राक्ष । विलोक्यात्मगतम् । अहो ! महार्हाण्याभरणानि प्रकाशम् । भद्र ! उच्यतां शकटदासः, परितोष्य विक्रेतारं, गृह्यतामिति ।

पुरु । जं अमच्चो आणवेदि त्ति (२६) । निष्क्रान्तः ।

राक्ष । स्वगतम् । यावदहमपि कुसुमपुराय करभकं प्रेषयामि । उत्थाय । अपि नाम दुरात्मनश्चाणक्यहतकात् चन्द्रगुप्तो भिद्येत, अथवा सिद्धमेव समीहितं पश्यामि । कुतः ?

मौर्य्यस्तेजसि सर्वभूतलभुजामाज्ञापको वर्त्तते,
चाणक्योऽपि मदाश्रयादयमभूद्राजेति जातस्मयः ।
राज्यप्राप्तिकृतार्थमेकमपरं तीर्णप्रतिज्ञार्णवं,
सौहार्दात् कृतकृत्यतैव नियतं लब्धान्तरा भेत्स्यति ॥२३॥

इति निष्क्रान्ताः सर्वे ।

इति द्वितीयोऽङ्कः ।

---

(२६) यदमात्य आज्ञापयति इति ।

---

(२३) मौर्य्य इति । मौर्य्यश्चन्द्रगुप्तः सर्वभूतलभुजां सर्वेषां राज्ञाम् आज्ञापकः शास्ता सम्राडित्यर्थः, अत एव तेजसि गर्वे वर्त्तते । चाणक्योऽपि अयं चन्द्रगुप्तः मदाश्रयात् राजा अभूत् इति जातस्मयः सञ्जातगर्वः । अतः लब्धान्तरा प्राप्तावसरा कृतकृत्यता कृतार्थता एव राज्यप्राप्त्या कृतार्थं सिद्धकामम् एकं चन्द्रगुप्तं तीर्णप्रतिज्ञार्णवम् अपरं चाणक्यञ्च सौहार्द्दात् नियतं निश्चितं भेत्स्यति पृथक् करिष्यतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

# तृतीयोऽङ्कः ।

ततः प्रविशति कञ्चुकी ।

कञ्चु । रूपादीन् विषयान् निरूप्य करणैर्यैरात्मलाभस्त्वया
लब्धस्तेष्वपि चक्षुरादिषु हृताः स्वार्थावबोधक्रियाः ।
अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि मे,
न्यस्तं मूर्ध्नि पदं तवैव जरया, तृष्णे ! मुधा माद्यसि ॥ १ ॥

परिक्रम्याकाशे । भो भोः सुगाङ्गप्रासादाधिकृताः पुरुषाः ! सुगृहीतनामा देवश्चन्द्रगुप्तो वः समाज्ञापयति । यथा, प्रवृत्तकौमुदीमहोत्सवरमणीयतरं (क) कुसुमपुरमवलोक-

---

(१) रूपादीनिति । हे तृष्णे ! त्वया यैः करणैरिन्द्रियैः विषयान् शब्दादीन् निरूप्य अवधार्य्य आत्मलाभः स्ववृत्तिलाभः चरितार्थतेति यावत् लब्धः, सम्प्रति जरायां तेषु अपि आत्मलाभोपायेषु चक्षुरादिषु इन्द्रियेषु स्वार्थावबोधक्रिया स्वस्वविषयज्ञानरूपव्यापारा हृता नष्टाः, तदानीम् इन्द्रियाणां सम्यक्बोधाक्षमत्वादिति भावः । मम आज्ञाविधेयानि पूर्वं वशीभूतानि अङ्गानि प्रसभं क्रमेण पटुतां स्वस्वव्यापारसामर्थ्यं त्यजन्ति, अतः तवैव मूर्ध्नि शिरसि जरया पदं न्यस्तं दत्तम् इदानीं त्वं मुधा वृथा माद्यसि, जरायां वाञ्छा तिष्ठति परं भोगाक्षमत्वात् सा विफलेति भावः । शार्दूलविक्रीड़ितं वृत्तम् ।

(क) प्रवृत्तकौमुदीमहोत्सवरमणीयतरं प्रवृत्तः प्रारब्धः यः कौमुदीमहोत्सवः शारदपौर्णमासीसाध्यमहानन्दजनकव्यापारविशेषः तेन रमणीयतरं समधिकरमणीयम् ।

यितुमिच्छामि, तत् क्रियन्तामस्मद्दर्शनयोग्याः सुगाङ्गप्रासादस्योपरि भूमय इति, तत् किं चिरयन्ति भवन्तः ? आकाशे आकर्ण्य । किं ब्रूथ आर्य्य ! किमविदित एवायं देवस्य चन्द्रगुप्तस्य कौमुदीमहोत्सवप्रतिषेध इति ? आः दैवोपहताः, किमनेन वः प्राणहरेण कथोद्घातेन (ख)। शीघ्रमिदानीम्,

आलिङ्गन्तु गृहीतधूपसुरभीन् स्तम्भान् पिनद्धस्रजः
सम्पूर्णेन्दुमयूखसंहतिरुचां सच्चामराणां श्रियः ।
सिंहाङ्कासनधारणाच्च सुचिरं सञ्जातमूर्च्छामिव
चिप्रं चन्दनवारिणा सकुसुमः सेकोऽनुगृह्णातु गाम् ॥ २ ॥

आकाशे । किं कथयन्ति भवन्तः, एते त्वरामह इति ? भद्राः ! त्वरध्वम् अयमागत एव चन्द्रगुप्तः । य एषः,

---

(ख) कथोद्घातेन कथाप्रसङ्गेन ।

(२) आलिङ्गन्तु इति । सम्पूर्णेन्दुमयूखसंहतिरुचां पूर्णचन्द्रकिरणसमूहकान्तीनां सच्चामराणां श्रियः शोभाः पिनद्धस्रजः माल्यवेष्टितान्, गृहीतधूपसुरभीन् धृतधूपसौरभान् स्तम्भान् प्रासादस्येति शेषः आलिङ्गन्तु आश्रयन्तु । सुचिरं सन्ततं सिंहाङ्कासनधारणात् राजसिंहासनस्य धारणात् अथच सिंहेन स्वक्रोड़रूपासने धारणात् सञ्जातमूर्च्छां बहुभारधारणात् सिंहभयाच्च मूर्च्छितामिव गां भूमिं धेनुञ्च सकुसुमः पुष्पसहितः चन्दनवारिणा सेकः चिप्रं शीघ्रम् अनुगृह्णातु, यथा सिंहक्रोड़पतितायाः मूर्च्छितायाः गोर्जलादिसेकादाश्वासनं तथा गुरुभारसिंहासनधारणात् श्रान्ता भूमिः चन्दनवारिणा आश्वास्यतामिति भावः । शार्द्दूलविक्रीड़ितं वृत्तम् ।

सुविश्रब्धैरङ्गैः पथिषु विषमेष्वप्यचलता
चिरं धुर्य्यैर्वोढ़ा गुरुरपि भुवो याऽस्य गुरुणा ।
धुरं तामेवोच्चैर्नववयसि वोढुं व्यवसितो
मनस्वी दम्यत्वात् स्खलति न च, दुःखं वहति च ॥३॥

नेपथ्ये । इत इतो देवः ।

ततः प्रविशति राजा प्रतीहारी च ।

राजा । स्वगतम् । राज्यं हि नाम राजधर्मानुवृत्ति-परतन्त्रस्य (ग) भूपतेर्म्महदप्रीतिस्थानम् । यतः,

परार्थानुष्ठाने जड़यति नृपं स्वार्थपरता,
परित्यक्त[क्तान्यार्थो]स्वार्थो नियतमयथार्थः क्षितिपतिः ।
परार्थश्चेत् स्वार्थादभिमततरो, हन्त परवान्,
परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुषः ॥ ४ ॥

---

(३) सुविश्रब्धैरिति । विषमेषु दुर्गमेषु दुरवगमेषु वा अपि पथिषु मार्गेषु राजनीत्यादिषु च अचलता अस्खलता धुर्य्येण भारवहनक्षमेण अस्य चन्द्रगुप्तस्य गुरुणा जनकेन नन्देन सुविश्रब्धैः सुविश्वस्तैः सुदृढैश्च अङ्गैः अमात्यादिभिः स्वाम्यादिभिश्च भुवः पृथिव्या गुरुरपि या धुः भारश्चिन्ता च चिरम् जड़ा धृता, नवे वयसि मनस्वी प्रशस्तमनाः महानुभाव इत्यर्थः तामेव उच्चैः महतीं धुरं वोढुं व्यवसितः उद्यतः दम्यत्वात् विनेयभावात् न स्खलति न च्यवते दुःखं परिश्रमजनितं वहति च । शिखरिणीवृत्तम् ।

(ग) राजधर्मानुवृत्तिपरतन्त्रस्य राजधर्म्मस्य शास्त्रविहितस्य अनुवृत्तिः अनुसरणं तस्य परतन्त्रः अधीनः तस्य ।

(४) परार्थानुष्ठान इति । परार्थानुष्ठाने परेषां कार्य्यदर्शनादि-व्यापारे स्वार्थपरता स्वकार्य्यसाधनप्रवृत्तिः नृपं जड़यति आक्रामति,

अपिच । दुराराध्या हि राजलक्ष्मीरात्मवद्भिरपि (च) राजभिः । कुतः ?

तीक्ष्णादुद्विजते, मृदौ परिभवत्रासान्न सन्तिष्ठते,
मूर्खान् द्वेष्टि, न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ।
शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरेव वेश्यवनिता दुःखोपचर्य्या भृशम् ॥५॥

---

परकार्य्यकरणे अर्थागमदर्शनात् तदायत्तं करोतीत्यर्थः । परित्यक्तस्वार्थः त्यक्तनिजकार्य्यः नियतं निश्चितम् अयथार्थक्षितिपतिः अननुगतनामा पृथिवीपतिः, स्वकार्य्यकरणेनैवास्य क्षितिपतित्वम् अन्यथा विफलमिति भावः । परार्थः परकार्य्यं स्वार्थात् स्वकार्य्यात् अभिमततरः प्रियतरश्चेत् तर्हि परवान् पराधीनो भवेदिति शेषः, हन्तेति खेदद्योतनार्थमव्ययम् । परायत्तः पराधीनः पुरुषः कथमिव केन प्रकारेण प्रीतेः सुखस्य रसम् आस्वादं वेत्तु अनुभवतु । शिखरिणीवृत्तम् ।

(च) आत्मवद्भिः वशीकृतेन्द्रियैः ।

(५) तीक्ष्णादिति । अहो इति आश्चर्य्यद्योतकमव्ययम् । श्रीः लक्ष्मीः लब्धप्रसरा लब्धप्रतिष्ठा आदरिणी इत्यर्थः वेश्यवनितेव वाराङ्गनेव भृशम् अत्यर्थं दुःखोपचर्य्या दुःखेन उपचर्य्या सेव्या । तथाहि, तीक्ष्णात् उग्रात् जनात् उद्विजते उद्विग्ना कदाचित् मां नाशयेदिति उद्विग्ना भवति, मृदौ शान्तस्वभावे अविक्रान्ते इति यावत् परिभवत्रासात् अन्यकृतावमानभयात् न सन्तिष्ठते, मूर्खान् अज्ञान् अविवेकिन इत्यर्थः द्वेष्टि, अत्यन्तविद्वत्सु अपि प्रणयिताम् अनुरागं न गच्छति, विद्यायामेव तेषामनुरागात् विरागकारणमिति भावः । शूरेभ्यः वीरेभ्यः अपि अधिकं बिभेति, कदा मां यत् हस्तं नेष्यतीति सम्भावनयेति भावः ।

अन्यच्च, कृतककलहं कृत्वा, स्वतन्त्रेण च त्वया कञ्चित् कालं व्यवहर्त्तव्यमित्यार्य्योपदेशः। स चं कथमपि मया पातकमिवाभ्युपगतः (ङ), अथवा शश्वदार्य्योपदेशसंस्कृत-मतयः सदैवास्वतन्त्रा वयम्। कुतः?

इह हि रचयन् साध्वीं शिष्यः क्रियां न निवार्य्यते,
त्यजति तु यदा मार्गं मोहात् तदा गुरुरङ्कुशः।
विनयरुचयस्तस्मात् सन्तः सदैव निरङ्कुशाः,
परतरमतः स्वातन्त्र्येभ्यो वयं हि पराङ्मुखाः ॥६॥

प्रकाशम्। आर्य्य! वैहीनरे! सुगाङ्गप्रासादमार्गमादेशय।

कञ्चु०। इत इतो देवः।

राजा परिक्रामति।

कञ्चु०। परिक्रम्य। अयं सुगाङ्गप्रासादः, शनैरारोढुमर्हत्यार्य्यः।

---

एकान्तभीरून् अतिभयशीलान् उपहसति, अचलोऽयं कथं मां रक्षिष्यतीति मत्वेति भावः। शार्दूलविक्रीडितं वृत्तम्।

(ङ) अभ्युपगतः अङ्गीकृतः।

(६) इहेति। इह अस्मिन् जगति साध्वीं क्रियां सत्कार्य्यं रचयन् कुर्वन् शिष्यः न निवार्य्यते गुरुणेति शेषः, यदा तु मोहात् अज्ञानात् मार्गं पन्थानं सदाचाररूपं त्यजति तदा गुरुः अङ्कुशः तत्र गमननिवारकास्त्रविशेषः भवतीति शेषः। तस्मात् शिष्याः विनयरुचयः विनीताः सन्तः साधुशीलाश्च सदैव निरङ्कुशाः निरोधशून्याः गुरुस्तान् न निवारयतीत्यर्थः। अतः कारणात् वयं हि निश्चितं स्वातन्त्र्येभ्यः स्वाधीनताभ्यः परतरम् अत्यन्तं यथा तथा पराङ्मुखा भवेम। हरिणीवृत्तं "नसमरसलगाः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात्।

राजा। नाट्येनाहृत्य दिशोऽवलोक्य। अहो शरत्समयसंभृत-
शोभाविभूतीनां दिशामतिरमणीयता! कुतः?

शनैः शान्ता भूताः सितजलधरच्छेदपुलिनाः,
समन्तादाकीर्णाः कलविरुतिभिः सारसकुलैः।
चिताश्चित्राकारैर्निशि विकचनक्षत्रकुमुदै-
र्नभस्तः स्यन्दन्ते सरित इव दीर्घा दश दिशः॥ ७॥

अपिच,

अपामुद्वृत्तानां निजमुपदिशन्त्या स्थितिपथं,
दधत्या शालीनामवनतिमुदारे सति फले।
मयूराणामुग्रं विषमिव हरन्त्या मदमहो
कृतः कृत्स्नस्यायं विनय इव लोकस्य शरदा॥ ८॥

---

(७) शनैरिति। सितजलधरच्छेदपुलिनाः सितजलधरच्छेदाः जलाभावात् धवलमेघखण्डाः पुलिनानीव यासां ताः शनैः क्रमेण वर्षापगमात् शान्ताः निर्मलाः भूताः जाताः, कलविरुतिभिः मधुरनिनादैः सारसकुलैः समन्तात् चतुर्दिक्षु आकीर्णाः व्याप्ताः, निशि रजन्यां चित्राकारैः विचित्रैः विकचानि प्रफुल्लानि नक्षत्राणि कुमुदानीव तैः चिताः व्याप्ताः दीर्घाः मेघावरणराहित्यात् तथा प्रतीयमाना इत्यर्थः दश दिशः सरित इव नभस्तः आकाशात् स्यन्दन्ते निःसरन्ति प्रादुर्भवन्ति प्रकाशन्ते इति यावत्। शिखरिणीवृत्तम्।

(८) अपामिति। उद्वृत्तानां प्रवृद्धानाम् उद्धतानामिति ध्वनिः अपां जलानां निजं स्वाभाविकं स्थितिपथं स्वस्थानस्थितिमार्गं मर्यादाञ्च उपदिशन्त्या नियोजयन्त्या, उदारे महति फले शस्ये विद्यादौ च सति शालीनां धान्यानाम् अवनतिं नततां विनीतताञ्च दधत्या जनयन्त्या, उग्रं तीक्ष्णं विषमिव मयूराणां मदं गर्वं हरन्त्या शरदा कृत्स्नस्य समग्रस्य

अपिच,

भर्त्तुस्तथा कलुषितां बहुवल्लभस्य
मार्गे कथञ्चिदवतार्य्य तनूभवन्तीम् ।
सर्वात्मना रतिकथाचतुरेव दूती
गङ्गां शरन्नयति सिन्धुपतिं प्रसन्नाम् ॥ ९ ॥

समन्तादवलोक्य । अये ! कथमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरं पश्यामि ? आर्य्य ! वैहीनरे ! अथ (च) त्वया-स्मद्वचनादाघोषितः कुसुमपुरे कौमुदीमहोत्सवः ?

कञ्चु । देव ! अथ किम् । आघोषितो देवस्याज्ञया कुसुमपुरे कौमुदीमहोत्सवः ।

राजा । आर्य्य ! तदेवं किं न परिगृहीतमस्मद्वचनं पौरजनेन ?

कञ्चु । कर्णौ पिधाय । देव ! शान्तं पापं, शान्तं पापं

---

लोकस्य जगतः अयं विनय इव कृतः, अहो इति आश्चर्य्यद्योतक-मव्ययम् । उत्प्रेक्षालङ्कारोऽयमत्रेति बोद्धव्यम् । शिखरिणीवृत्तम् ।

(९) भर्त्तुरिति । शरत् रतिकथायां चतुरा दूतीव बहुवल्लभस्य बहु-नदीस्वामित्वात् अनेककान्तस्य भर्त्तुः चरित्रदोषादिति शेषः कलुषिताम् आविलाम् अप्रसन्नाम् ईर्ष्यावतीमित्यर्थः, तथा तनूभवन्तीं वर्षावसानेन दुःखेन च कृशतन्वीं कृशाङ्गीञ्च गङ्गां मार्गे स्वस्थानदेशे मर्य्यादायाञ्च कथञ्चित् कष्टेन सर्वात्मना सर्वप्रकारेण तत्तत्प्रबोधवाक्यैरित्यर्थः अवतार्य्य स्थापयित्वा सिन्धुपतिं समुद्रं पतिं वा नयति प्रापयति अनुकूलयति वा । वसन्ततिलकं वृत्तम् ।

(च) अथेति प्रश्नार्थमव्ययं किमित्यर्थः ।

पृथिव्यामस्खलितपूर्व्वं देवस्य शासनं, कथं पौरेषु स्खलितु-मर्हति ?

राजा । आर्य्य ! वैहीनरे ! तत् कथमप्रवृत्तकौमुदी-महोत्सवमधुनापि कुसुमपुरं पश्यामि ? पश्य,

धूर्त्तैरन्वीयमानाः स्फुटचतुरकथाकोविदैर्वेशनार्य्यो
नालंकुर्व्वन्ति रथ्याः पृथुजघनभराक्रान्तिमन्दैः प्रयातैः ।
अन्योन्यं स्पर्द्धमाना न च गृहविभवैः स्वामिनो मुक्तशङ्काः
साकं स्त्रीभिर्भजन्ते विधिमभिलषितं पार्व्वणं पौरमुख्याः ॥१०

कञ्चु । देव ! एवमेतत् ।

राजा । किमेतत् ?

कञ्चु । देव ! अत इदम् ।

राजा । आर्य्य ! स्फुटमभिधीयताम् ।

कञ्चु । देव ! प्रतिषिद्धः कौमुदीमहोत्सवः ।

राजा । सक्रोधम् । आर्य्य ! आः, केन ?

कञ्चु । नातः परमस्माभिर्देवो विज्ञापयितुं शक्यते ।

---

(१०) धूर्त्तैरिति । वेशनार्य्यः वारविलासिन्यः स्फुटचतुरकथा-कोविदैः सुव्यक्तचातुरीप्रसङ्गपण्डितैः धूर्त्तैः लम्पटैः अन्वीयमानाः अनु-गम्यमानाः सत्यः पृथुजघनभराक्रान्तिमन्दैः विशालजघनभरालसैः प्रयातैः गतिभिः रथ्याः राजमार्गान् न अलङ्कुर्वन्ति शोभयन्ति ।, किञ्चेति चार्थः, पौरमुख्याः पुरवासिनां प्रधानाः स्वामिनः गृहस्वामिनः गृहविभवैः गृहैश्वर्य्यैः अन्योऽन्यं परस्परं स्पर्द्धमानाः मुक्तशङ्काः निर्भी-काश्च सन्तः स्त्रीभिः साकं सह अभिलषितं वाञ्छितं पार्व्वणं विधिं महोत्सवं न भजन्ते सेवन्ते । स्रग्धरावृत्तम् ।

राजा। न खलु आर्य्येण चाणक्येनापहृतः प्रेक्षकाणामतिशयरमणीयश्चक्षुषो (क) विषयः ?

कञ्चु। देव! कोऽन्यो जीवितुकामो देवस्य शासनमुल्लङ्घयिष्यति ?

राजा। शोणोत्तरे! उपवेष्टुमिच्छामि।

प्रती। देव! एदं सिंहासणं, उपविसदु देवो (१)।

राजा। नाट्येनोपविश्य। आर्य्य! वैहीनरे! आर्य्यचाणक्यं द्रष्टुमिच्छामि।

कञ्चु। यदाज्ञापयति देव इति। निष्क्रान्तः।

ततः प्रविशति आसनस्थः स्वभवनगतः कोपानुविद्धां चिन्तां नाटयंश्चाणक्यः।

चाण। आत्मगतम्। कथं स्पर्द्धते मया सह दुरात्मा राक्षसहतकः? कुतः?

कृतागाः कौटिल्यो भुजग इव निर्याय नगरात्
यथा नन्दं हत्वा नृपतिमकरोत् मौर्य्यवृषलम्।
तथाहं मौर्य्येन्दोः श्रियमपहरामीति कृतधीः,
प्रभावं मद्बुद्धेरतिशयितुमेष व्यवसितः॥ ११॥

(१) देव! एतत् सिंहासनम्। उपविशतु देवः।

(क) प्रेक्षकाणां दर्शकानाम्।

(११) कृतागा इति। भुजग इव कृतागाः कृतम् आगः अपराधः नन्दाधिक्षेपणरूपः अपराधः यस्य सः कौटिल्यः नगरात् निर्याय नन्दं हत्वा यथा मौर्य्यवृषलं चन्द्रगुप्तं नृपतिम् अकरोत्, तथा अहं

प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा। राक्षस! राक्षस! विरम्यतामस्माद् दुर्व्यवसितात् (ज)।

उत्सिक्तः कुसचिवदृष्टराज्यतन्त्रो
नन्दोऽसौ न भवति चन्द्रगुप्त एषः।
चाणक्यस्त्वमपि च नैव केवलं ते
साधर्म्यं मदनुकृतेः प्रधानवैरम् ॥ १२ ॥

विचिन्त्य। अथवा, नातिमात्रमस्मिन् वस्तुनि मया मनः खेदयितव्यम्। कुतः?

मद्भृत्यैः किल नाम पर्वतसुतो व्याप्तः प्रतिष्ठान्तरैरव्युत्ताश्च नियोगसाधनविधौ सिद्धार्थकाद्याः स्पशाः।
कृत्वा सम्प्रति कैतवेन कलहं मौर्येन्दुना, राक्षसं
भेत्स्यामि स्वमतेन, भेदकुशलो ह्येष प्रतीपं द्विषः ॥१३॥

---

मौर्येन्दोः श्रियम् अपहरामि इति कृतधीः कृतबुद्धिः एषः मद्बुद्धेः प्रभावम् अतिशयितुम् अतिक्रमितुं व्यवसितः प्रवृत्तः। शिखरिणीवृत्तम्।

(ज) दुर्व्यवसितात् दुश्चेष्टितात् असाध्यव्यापारादित्यर्थः।

(१२) उत्सिक्त इति। उत्सिक्तः गर्वितः कुसचिवदृष्टराज्यतन्त्रः कुमन्त्रिदृष्टराज्यभारः असौ नन्दः एष चन्द्रगुप्तः न भवति। त्वमपि चाणक्यः नैव, प्रधानवैरं महावैरिभावः केवलं ते तव मदनुकृतेः मदनुकरणस्य साधर्म्यं सौसादृश्यम्। प्रहर्षिणीवृत्तं "म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात्।

(१३) मद्भृत्यैरिति। मद्भृत्यैः मम भृत्यैः प्रतिष्ठान्तरैः विपक्षसमीपे लब्धप्रतिष्ठैः भागुरायणादिभिः पर्वतसुतो मलयकेतुः व्याप्तः परिवृतः वशीकृत इत्यर्थः, किलेति निश्चयार्थमव्ययं, नाम सम्भावनाया-

प्रविश्य कञ्चुकी। कष्टा खलु सेवा नाम! कुतः?

भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभा-
दन्येभ्यश्च भवन्ति येऽस्य भवने लब्धप्रसादा विटाः।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायास्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥१४॥

परिक्रम्यावलोक्य च। इदमार्य्यचाणक्यस्य गृहं, यावत् प्रविशामि। नाट्येन प्रविश्यावलोक्य च। अहो राजाधिराज-मन्त्रिणो गृहभूतिः (क)! कुतः?

---

अव्ययम्। सिद्धार्थकाद्याः स्पशाः चराः "अपसर्पश्चरः स्पशः" इत्यमरः। नियोगसाधनविधौ मदाज्ञापालनरूपे विधाने उद्युक्ताः प्रवृत्ताः। अस्मि भेदकुशलः अहं कैतवेन छलेन मौर्य्येन्दुना चन्द्रगुप्तेन कलहं कृत्वा स्वमतेन हि स्वबुद्ध्या एव प्रतीपं प्रतिकूलं राक्षसं द्विषः शत्रोः मलयकेतोः भेत्स्यामि पृथक् करिष्यामि। शार्दूलविक्रीडितं वृत्तम्।

(१४) भेतव्यमिति। प्रथमं नृपतेः ततः सचिवतः प्रधानमन्त्रिणः ततः राज्ञः वल्लभात् प्रियजनात् ततः अस्य राज्ञः भवने लब्धप्रसादाः प्राप्तानुग्रहाः ये विटाः धूर्त्ताः भवन्ति वर्त्तन्ते, तेभ्योऽपि भेतव्यं शङ्कितव्यम्। अतः कृतधियः शिक्षितबुद्धयः पण्डिताः दैन्यात् दीनभावात् नीचप्रकृतिकत्वात् पिण्डार्थम् अन्नार्थम् उन्मुखदर्शनापलपनैः उन्मुखानि ऊर्द्ध्वमुखानि दर्शनानि अपलपनानि काकूक्तयश्च तानि तैः आयास्यतः प्रयतमानस्य जनस्य लाघवकारिणीं नीचत्वविधायिनीं सेवां श्ववृत्तिं कुक्कुरजीविकां विदुः जानन्ति स्थाने युक्तमेव "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। शार्दूलविक्रीडितं वृत्तम्।

(क) गृहभूतिः गृहैश्वर्य्यम्।

उपलशकलमेतद्भेदकं गोमयानां
वटुभिरुपहृतानां बर्हिषां स्तोममेतत्।
शरणमपि समिद्भिः शुष्यमाणाभिराभि-
र्विनमितपटलान्तं दृश्यते जीर्णकुड्यम्॥१५॥

ततः स्थाने खल्वस्य वृषलो देवश्चन्द्रगुप्त इति। कुतः?

स्तुवन्त्यश्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः,
प्रवाचः कार्पण्याद्‌वितथवाचोऽपि कृतिनः।
प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा,
निरीहाणामीशस्तृणमिव तिरस्कारविषयः॥१६॥

विलोक्य सभयम्। तदयमार्य्यचाणक्यस्तिष्ठति।

---

(१५) उपलशकलमिति। एतत् उपलशकलं प्रस्तरखण्डं गोमयानां शुष्काणामिति शेषः भेदकम्, एतत् वटुभिः ब्राह्मणबालकैः शिष्यभूतैरित्यर्थः उपहृतानाम् आहृतानां बर्हिषां दर्भाणां स्तोमं संहतिः। शरणं गृहमपि आभिः शुष्यमाणाभिः समिद्भिः विनमित-पटलान्तम् अतिनमितच्छदिप्रान्तं जीर्णकुड्यं दृश्यते। मालिनीवृत्तं "ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात्।

(१६) स्तुवन्तीति। प्रवाचः मिष्टभाषिणः अवितथवाचः सत्यवादरताः कृतिनः साधवः अपि कार्पण्यात् दैन्यात् अश्रान्तास्याः अमरहितमुखाः सन्तः अभूतैरपि अविद्यमानैरपि गुणैः क्षितिपतिं प्रभुं स्तुवन्ति इति यत् स खलु तृष्णायाः धनाशायाः सकलः सम्पूर्णः प्रभावः महिमा स्यात्, इतरथा अन्यथा धनाशाविरहे इत्यर्थः निरीहाणां निश्चेष्टानां निस्पृहाणामित्यर्थः ईशः प्रभुः तृणमिव तिरस्कारविषयः अनादरणीय इत्यर्थः। शिखरिणीवृत्तम्।

यो नन्दमौर्य्यनृपयोः परिभूय लोक-
मस्तोदयौ प्रतिदिशन्नविभिन्नकालम् ।
पर्य्यायपातितहिमोष्णिम सर्वगामि,
धाम्नातिशाययति धाम सहस्रधाम्नः ॥ १७ ॥

जानुभ्यां भूमौ निपत्य । जयतु जयत्वार्य्यः ।

चाण । नाट्येनावलोक्य । वैहीनरे ! किमागमनप्रयोजनम् ?

कञ्चु । आर्य्य ! प्रणतिसम्भ्रमसमुच्चलितभूमिपालमौलि-मणिसकलशिखापिशङ्गीकृतपादपद्मयुगलः, पादपद्मयोरार्य्यं प्रणिपत्य देवश्चन्द्रगुप्तो विज्ञापयति, क्रियान्तरमन्तरायमन्तरेणार्य्यं (ञ) द्रष्टुमिच्छामीति ।

चाण । वृषलो मां द्रष्टुमिच्छति । वैहीनरे ! न खलु वृषलस्य श्रवणमुपगतोऽयं मया कृतः कौमुदीमहोत्सव-प्रतिषेधः ।

कञ्चु । आर्य्य ! अथ किम् ।

---

(१७) य इति । यश्चाणक्यः लोकं राजसैन्यं भुवनञ्च परिभूय पराजित्य सन्ताप्य च नन्दमौर्य्यनृपयोः अविभिन्नकालं समकालम् अस्तोदयौ नाशवृद्धी अदर्शनदर्शने च प्रतिदिशन् कुर्वन् धाम्ना तेजसा पर्य्यायपातितहिमोष्णिम पर्य्यायेण क्रमेण नतु समकालमित्यर्थः पातितं दत्तं हिमम् उष्णिमा उष्णत्वञ्च येन तथोक्तं सत् सर्वगामि सहस्रधाम्नः सूर्य्यस्य धाम तेजः अतिशाययति अतिशय्य वर्त्तते । अत्र व्यतिरेकालङ्कारो द्रष्टव्यः । वसन्ततिलकं वृत्तम् ।

(ञ) क्रियान्तरं क्रियाविशेषं कार्य्यान्तरम् । अन्तरायं विघ्नम् अन्तरेण विना, यदि कार्य्यविघ्नो न स्यात् तदेत्यर्थः ।

चाण। सक्रोधम्। आः! केन कथितम्?

कञ्चु। भयं नाटयित्वा। प्रसीदत्वार्य्यः। स्वयमेव सुगाङ्ग-प्रासादशिखरगतेन देवेनावलोकितमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम्।

चाण। आः, ज्ञातं तिष्ठ, तावद्भवद्भिरेवमदन्तरेण प्रोत्साह्य (ट) रोषितो वृषलः, किमन्यत्?

कञ्चु। सभयं तूष्णीमधोमुखस्तिष्ठति।

चाण। अहो राजपरिजनस्य चाणक्यस्योपरि विद्वेष-पक्षपातः। अथ क्व वृषलस्तिष्ठति?

कञ्चु। भयं नाटयन्। आर्य्य! सुगाङ्गप्रासादगतेन देवे-नाहमार्यपादमूलं प्रेषितः।

चाण। उत्थाय। कञ्चुकिन्! सुगाङ्गप्रासादमार्गमादेशय।

कञ्चु। इत इत आर्य्य इति। उभौ परिक्रामतः।

कञ्चु। अयं सुगाङ्गप्रासादः, शनैरारोढुमर्हत्यार्य्यः।

चाण। नाट्येनावरुह्यावलोक्य च सहर्षमात्मगतम्। अये! सिंहासनमध्यास्ते वृषलः। साधु, साधु।

नन्दैर्वियुक्तमनपेक्षितराजवृत्तै-
रध्यासितञ्च वृषलेन वृषेण राज्ञाम्।
सिंहासनं सदृशपार्थिवसङ्गतञ्च,
प्रीतिं परां प्रगुणयन्ति गुणा ममैते॥ १८॥

---

(ट) मदन्तरेण मां विना ममासन्निधिं प्राप्य इत्यर्थः। प्रोत्साह्य भेदवचनैः उद्दीप्य इत्यर्थः।

(१८) नन्दैरिति। सिंहासनम् अनपेक्षितराजवृत्तैः अदृष्टराज-

उपसृत्य। विजयतां वृषलः।

राजा। सिंहासनादुत्थाय चाणक्यस्य पादौ गृहीत्वा। आर्य्य! चन्द्रगुप्तः प्रणमति।

चाण। पाणौ गृहीत्वा। उत्तिष्ठोत्तिष्ठ वत्स!

आ शैलेन्द्राच्छिलान्तस्खलितसुरधुनीशीकरासारशीता-
दा तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य।
आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां
चूड़ारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥१९॥

राजा। आर्य्यप्रसादादनुभूयत एवैतत् नाशास्यते उपविशत्वार्य्य इति। उभौ यथासनमुपविष्टौ।

चाण। वृषल! किमर्थं वयमाहूताः?

राजा। आर्य्यस्य दर्शनेनात्मानमनुग्रहीतुम्।

---

व्यवहारैः नन्दैः वियुक्तं विरहितं राज्ञां वृषेण श्रेष्ठेन वृषलेन अध्यासितं सदृशपार्थिवसङ्गतञ्च एते गुणाः उक्तप्रकाराः घटनाः मम परां प्रीतिं प्रगुणयन्ति जनयन्ति। वसन्ततिलकं वृत्तम्।

(१९) आशैलेन्द्रादिति। शिलान्तस्खलितसुरधुनीशीकरासारशीतात् शिलान्तात् प्रस्तरप्रान्तभागात् स्खलितायाः पतितायाः सुरधुन्याः गङ्गायाः शीकरा एव आसाराः धारासम्पाताः तैः शीतात् सहजशीतादपि गङ्गाजलस्पर्शादतिशीतादित्यर्थः, आ शैलेन्द्रात् आ हिमालयात् नैकरागस्फुरितमणिरुचः अनेकविधभासमानमणिकान्तियुतात् दक्षिणस्य अर्णवस्य समुद्रस्य आ तीरात् आकूलात् आगत्य आगत्य भीतिप्रणतनृपशतैः भीत्या प्रणतानां नृपाणां शतैः शश्वदेव सततमेव तव चरणयुगस्य पदद्वयस्य अङ्गुलीरन्ध्रभागाः अङ्गुलिच्छिद्रप्रदेशाः चूड़ारत्नांशुगर्भाः मुकुटरत्नकिरणोदराः क्रियन्ताम्! स्रग्धरावृत्तम्।

चाण। स्मितं कृत्वा। वृषल ! अलमनेन प्रश्रयेण (ठ), न निष्प्रयोजनमधिकारवन्तः प्रभुभिराहूयन्ते। तत् प्रयोजनमभिधीयताम्।

राजा। आर्य्य ! कौमुदीमहोत्सवप्रतिषेधस्य किं फलमार्य्यः पश्यति ?

चाण। स्मितं कृत्वा। वृषल ! उपालब्धुं (ड) तर्हि वयमाहूताः ?

राजा। आर्य्य ! नोपालब्धुम्।

चाण। किं तर्हि ?

राजा। विज्ञापयितुम्।

चाण। वृषल ! यद्येवं तर्हि विज्ञापनीयानामवश्यं रुचयोऽनुरोद्धव्याः (ढ)।

राजा। आर्य्य ! कः सन्देहः, किन्तु न कदाचिदपि आर्य्यस्य निष्प्रयोजना रुचिः प्रवर्त्तिष्यत इति अस्ति नः प्रश्नावकाशः।

चाण। वृषल ! सम्यग्गृहीतवानसि मदाशयम्। नहि प्रयोजनमनपेक्षमाणः स्वप्नेऽपि चाणक्यो रुचिं प्रवर्त्तयिष्यति।

राजा। आर्य्य ! अत एव मां प्रयोजनशुश्रूषा मुखरयति (ण)।

---

(ठ) प्रश्रयेण विनयेन।

(ड) उपालब्धुं तिरस्कर्त्तुम्।

(ढ) रुचयः अभिप्रायाः। अनुरोद्धव्याः अनुसरणीयाः प्रतिपाल्याः इत्यर्थः।

(ण) मुखरयति वाचालयति कथनाय प्रवर्त्तयति इत्यर्थः।

चाण। वृषल! श्रूयताम्, इह खल्वर्थशास्त्रकारास्त्रिविधसिद्धिमुपवर्णयन्ति। तद्यथा, राजायत्तां, सचिवायत्ताम्, उभयायत्ताञ्चेति। तत् सचिवायत्तसिद्धे र्भवतः किं फलान्वेषणेन वाङ्मनसयोः खेदमुत्पादयितुं, यतो वयमेवात्र नियुक्ता वेत्स्यामः।

राजा सकोप इव मुखं परिवर्त्तयति।

ततो नेपथ्ये वैतालिकौ पठतः।

एकः,

आकाशं काश[तूल]पुष्पच्छविमभिभवता भस्मना शुक्लयन्ती
शीतांशोरंशुजालैर्जलधरमलिनां क्लिन्दती कृत्तिमैभीम्।
कापालीमुद्वहन्ती स्रजमिव धवलां कौमुदीमित्यपूर्व्वा
हासश्रीराजहंसा हरतु तनुरि[ह]व क्लेशमैशी शरद्वः॥२०॥

अपिच,

---

(२०) आकाशमिति। काशपुष्पच्छविं काशपुष्पस्य छविं कान्तिम् अभिभवता तिरस्कुर्वता भस्मना आकाशं शुक्लयन्ती धवलयन्ती, शीतांशोश्चन्द्रस्य अंशुजालैः किरणसमूहैः जलधरमलिनां मेघश्यामाम् ऐभिं कीर्त्तिं हस्तिचर्म ईशस्य परिधानभूतामित्यर्थः क्लिन्दती सिञ्चन्ती, तथा धवलां कौमुदीमिव कापालीं नरकपालनिर्मितां स्रजं मालाम् उद्वहन्ती, हासश्रीराजहंसा हासस्य श्रीरिव राजहंसः यस्यां तादृशी ऐशी तनुः शिवमूर्त्तिरिव शरत् वो युष्माकं क्लेशं हरतु। पक्षे विभक्तिविपरिणामेनान्वयः कर्त्तव्यः। यथा भस्म अभिभवन्त्या काशपुष्पच्छव्या आकाशं शुक्लयन्तीत्यादि, एवं सर्वत्र। अत्र उपमालङ्कारः। स्रग्धरावृत्तम्।

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा-
मात्मव्यापारगुर्वी जनितजललवा, जृम्भितैः साङ्गभङ्गैः।
नागाङ्कं मोक्तुमिच्छोः शयनमुरु फणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः॥२१॥

द्वितीयः,

सत्त्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतो-
र्जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम्।
दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपा-
नाज्ञाभङ्गं सहन्ते नृवर! नृपतयस्त्वादृशाः सार्वभौमाः॥२२॥

---

(२१) प्रत्यग्रोन्मेषजिह्मेति। "शेते विष्णुः सदाषाढ़े कार्त्तिके च विबुध्यते" इति स्मरणात् शरदस्तु विष्णुनिद्राभङ्गस्य शास्त्रीयत्वात् तद्वर्णनं शरद्गुणवर्णनमेवेत्यभिप्रायेणाह प्रत्यग्रेति। प्रत्यग्रेण अभिनवेन उन्मेषेण उन्मीलनेन जिह्मा अलसा क्षणं व्याप्य उन्मीलनक्षणे इत्यर्थः रत्नदीपप्रभाणां शेषशिरस्थानि रत्नान्येव दीपाः तेषां प्रभाणाम् अनभिमुखी असम्मुखी साङ्गभङ्गैः अङ्गभङ्गसहितैः जृम्भितैः मुखविदारणादिव्यापारविशेषैः जनितजललवा सञ्चिताम्बुकणा आत्मव्यापारे दर्शनक्रियायां गुर्वी मन्थरा उरु महत् फणाचक्रवालं फणामण्डलम् उपधानं यस्य तादृशं नागाङ्कम् अनन्तक्रोडरूपं शयनं शय्यां मोक्तुं त्यक्तुमिच्छोः हरेः नारायणस्य निद्राच्छेदेन अभिताम्रा अतिरक्तवर्णा आकेकरा ईषत् सङ्कुचिता दृष्टिः वः युष्मान् अवतु रक्षतु। स्रग्धरावृत्तम्।

(२२) इदानीं राक्षसोपदेशात् चाणक्यचन्द्रगुप्तयोर्भेदं जनयिष्यन् आज्ञाभङ्गस्य प्रभोरसह्यत्वं दर्शयन्नाह सत्त्वोत्कर्षस्येति। हे नृवर! नरनाथ! स्वेन धाम्ना तेजसा मदसलिलमुचां मदस्रावियाणां गर्वितानाञ्च

अपिच,

भूषणाद्युप[भोगेन]चारेण प्रभुर्भवति न प्रभुः ।

परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥ २२ ॥

चाण । आकर्ण्यात्मगतम् । प्रथमं तावद्विशिष्टदेवतारूप-
णेन प्रवृत्तशरद्गुणप्रख्यापनमिदमाशीर्वचनम् (त) ; इद-
मपरं किमिति नावधारयामि । विचिन्त्य । आः, ज्ञातम् ।
राक्षसस्यायं प्रयोगः । आ दुरात्मन् ! राक्षसहतक ! दृश्यसे
जागर्त्ति खलु कौटिल्यः ।

राजा । आर्य्य ! वैहीनरे ! दीयतामाभ्यां वैतालिकाभ्यां
सुवर्णशतसहस्रम् ।

---

नागयूथेश्वराणां हस्तियूथपतीनां तत्सदृशानाञ्च जेतारः जयिनः कस्यापि हेतोः धात्रा विधिना सत्वोत्कर्षस्य शौर्य्यातिशयस्य निधयः आधारा इव कृताः सृष्टाः व्यक्तमानावलेपाः व्यक्तः प्रकटः मानावलेपः सम्मानजनितगर्वः येषां तादृशाः त्वादृशाः भवादृशाः सार्वभौमाः सर्व-भूमीश्वराः सम्राज इत्यर्थः मृगाणाम् अधिपतयः सिंहा इव आज्ञा-भङ्गम् आदेशव्याघातं न सहन्ते । उपमालङ्कारोऽयम् । स्रग्धरा-वृत्तम् ।

(२२) इदानीं भग्नाज्ञस्य प्रभुत्वं हथैवेत्याह भूषणाद्युपचारेणेति । भूषणाद्युपचारेण अलङ्कारादिरूपमौपचारिकसम्भोगेन प्रभुः प्रधानं प्रभुशब्द-वाच्यः न भवति । किन्तर्हीत्याह, परैः अन्यैः अपरिभूताज्ञः अस्ख-लिताज्ञः अभग्नादेशः त्वमिव अपरोऽपि प्रभुः प्रभवति अपरान् आज्ञया शास्तीति प्रभुः उच्यते कथ्यते । अनष्टुप्वृत्तम् ।

(त) विशिष्टदेवतारूपणेन विशेषणयुक्तदेवतारोपेण प्रवृत्तायाः उप-स्थितायाः शरदः गुणकीर्त्तनरूपम् आशीर्वचनम् आशीर्वादः ।

कञ्चु । यदाज्ञापयति देवः । इति उत्थाय परिक्रामति ।

चाण । सक्रोधम् । वैहीनरे ! तिष्ठ तिष्ठ, न गन्तव्यम् । वृषल ! किमयमस्थान एव महानर्थोत्सर्गः (थ) क्रियते ?

राजा । आर्य्येणैवं सर्वतो निरुद्धचेष्टाप्रसरस्य मम बन्धनमिव राज्यं, न राज्यमिव ।

चाण । वृषल ! स्वयमनभियुक्तानां (द) राज्ञामेते दोषा भवन्ति । तद् यदि न सहसे, तदा स्वयमेवाभियुज्यस्व ।

राजा । एते वयं स्वकर्म्मण्यभियुज्यामहे ।

चाण । प्रियं नः, वयमपि स्वकर्म्मण्यभियुज्यामहे ।

राजा । यद्येवं, तर्हि कौमुदीमहोत्सवप्रतिषेधस्य प्रयोजनं श्रोतुमिच्छामि ।

चाण । वृषल ! कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजनमित्यहमपि श्रोतुमिच्छामि ।

राजा । प्रथमं तावन्ममाज्ञा[विधानम्] [व्याघातः] (ध) ।

चाण । वृषल ! ममापि खलु त्वदाज्ञाव्याघात एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनमिति । कुतः ?

अम्भोधीनां तमालप्रभवकिसलयश्यामवेलावनाना-
मा पारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानाम् ।

---

(थ) अर्थोत्सर्गः अर्थानां धनानाम् उत्सर्गः व्ययः ।

(द) अनभियुक्तानां राजकार्य्येषु अदत्तमनसाम् ।

(ध) आज्ञाविधानम् आज्ञापालनम् । आज्ञाव्याघात इति पाठे आज्ञाया अव्याघातः आदेशप्रतिपालनमिति स एवार्थः ।

मालेवाज्ञा सपुष्पा नतनृपतिशतैरुह्यते या शिरोभिः,
सा मय्येव स्खलन्ती प्रथयति, विनयालङ्कृतं ते प्रभुत्वम् ॥२४॥

राजा । अथापरमपि प्रयोजनं यत् तच्छ्रोतुमिच्छामि ।

चाण । तदपि कथयामि ।

राजा । कथ्यताम् ।

चाण । शोणोत्तरे ! शोणोत्तरे ! मद्वचनात् कायस्थ-मचलदत्तं ब्रूहि, यत् तद्भद्रभटप्रभृतीनां लेख्यपत्रं तत् तावद्दीयतामिति ।

प्रती । जं अज्जो आणवेदि त्ति । निष्क्रम्य पुनः प्रविश्य । अज्ज ! एदं पत्तं (२) ।

चाण । गृहीत्वा । वृषल ! श्रूयताम् ।

राजा । दत्तावधानोऽस्मि ।

---

(२) यदार्य्य आज्ञापयतीति । आर्य्य ! इदं पत्रम् ।

---

(२४) अम्भोधीनामिति । तमालप्रभवकिसलयश्यामवेलावनानां तमालजातनवपल्लवेन श्यामानि वेलावनानि तीरवनानि येषां तथोक्तानां चटुलतिमिकुलक्षोभितान्तर्जलानां चटुलानाम् इतस्ततः सञ्चरतां तिमीनां मत्स्यविशेषाणां कुलैः समूहैः क्षोभितं विलोडितम् अन्तर्जलं येषां तादृशानां चतुर्णाम् अम्भोधीनां समुद्राणाम् आ पारेभ्यः आगतैरशे-षैः नतनृपतिशतैः नतानां नृपतीनां शतैः शिरोभिः सपुष्पा मालेव या तव आज्ञा उह्यते सा मयि एव नान्यत्रेत्यर्थः स्खलन्ती प्रतिघात-मापद्यमाना सती ते तव विनयालङ्कृतं प्रभुत्वं प्रथयति विस्तारयति । स्रग्धरावृत्तम् ।

चाण । वाचयति । स्वस्ति (न) सुगृहीतनामधेयस्य देवस्य चन्द्रगुप्तस्य सहोत्थायिनां प्रधानपुरुषाणाम् इतोऽपक्रम्य मलयकेतुमाश्रितानां परिमाणलेख्यपत्रम् (प)। तत्र प्रथमं, तावत् गजाध्यक्षो भद्रभटः, अश्वाध्यक्षः पुरुषदत्तः, महाप्रतीहारस्य (फ) चन्द्रभानोर्भागिनेयो हिङ्गुरातः, देवस्य स्वजनगन्धी (ब) महाराजो बलगुप्तः, देवस्यैव कुमारसेवको (भ) राजसेनः, सेनापतेः सिंहबलदत्तस्य कनीयान् भ्राता भागुरायणः, मालवराजपुत्रो रोहिताक्षः, क्षत्रगणमुख्यतमो विजयवर्मेति । आत्मगतम् । एते वयं देवस्य कार्य्ये अवहिताः स्म इति । प्रकाशम् । एतावदेतत् पत्रम् ।

राजा । आर्य्य ! एतेषामपरागहेतून् (म) श्रोतुमिच्छामि ।

चाण । वृषल ! श्रूयताम्, अत्र यावेतौ गजाध्यक्षाश्वाध्यक्षौ भद्रभटपुरुषदत्तनामानौ एतौ खलु स्त्रीमद्यमृगया-[सक्तौ] शीलौ हस्त्यश्वावेक्षणे ह्यनभियुक्ताविति, स्वाधिका- 6

---

(न) स्वस्तीति प्रथमं मङ्गलसूचनार्थम् ।

(प) परिमाणलेख्यपत्रं संख्यापत्रमिति यावत् ।

(फ) महाप्रतीहारस्य प्रधानदौवारिकस्य ।

(ब) स्वजनगन्धी स्वजनः आत्मीयजनः तस्य गन्धो विद्यते यत्रेति स्वजनसम्बन्धीत्यर्थः ।

(भ) कुमारसेवकः कुमारे शैशवे सेवकः अथवा आकुमारसेवकः ।

(म) अपरागहेतून् विरागकारणानि ।

राभ्यामवरोप्य (य) मया स्वजीवनमात्रेणैव स्थापिताविव्यप-रक्तौ, गत्वा स्वेन स्वेन चाधिकारेण व्यवस्थाप्य (र) मलय-केतुमाश्रितौ। यावेतौ हिङ्गुरातबलगुप्तौ तावप्यत्यन्त-लुब्धप्रकृती, [लोभासक्तौ] दत्तं धनमबहु मन्यमानौ, तत्र बहु लभ्यत इति मलयकेतुमाश्रितौ। योऽप्यसौ भवतः कुमारसेवको राजसेनः सोऽपि तव प्रसादादतिमात्रं कोष-हस्त्यश्वं सहसैव सुमहदैश्वर्यमवाप्य पुनरुच्छेदशङ्कयाऽप-क्रम्य मलयकेतुमाश्रितः। योऽयमपरः सेनापतेः सिंहबल-दत्तस्य कनीयान् भ्राता भागुरायणः, असावपि तत्र काले पर्व्वतकेन सह समुत्पन्नसौहार्दस्तत्प्रीत्या च 'पिता ते चाणक्येन घातित इति' रहसि त्रासयित्वा, मलयकेतुम-पवाहितवान् (ल) ततो भवदपथ्यकारिषु (व) चन्दनदासप्र-[मुखे][भृति] षु निगृह्यमाणेषु, स्वदोषाशङ्कयापक्रम्य मलय-केतुमाश्रितः, तेनाप्यसौ ममानेन प्राणाः परिरक्षिता इति कृतज्ञताम् (श) अनु[वर्त्ति][रुध्य]मानेन, पैतृकञ्च (ष) परि-चयम्, आत्मनोऽनन्तरममात्यपदं (स) ग्राहितः। यावेतौ

---

(य) अवरोप्य प्रच्याव्य भ्रंशयित्वेत्यर्थः।
(र) व्यवस्थाप्य व्यवस्थां कृत्वा।
(ल) अपवाहितवान् अपसारितवान्।
(व) भवदपथ्यकारिषु भवदनिष्टकारिषु।
(श) कृतघ्नतां प्रत्युपकारिताम्।
(ष) पैतृकं परिचयं सुहृद्भावम् अनुरुध्यमानेन अनुसरता।
(स) अनन्तरम् अव्यवहितोत्तरवर्त्ति।

रोहिताक्षविजयवर्म्माणौ, तावत्यन्तमानित्वात् स्वदायादेभ्य-स्त्वयादीयमानं बहुसम्मानमसहमानौ, मलयकेतुमाश्रितौ । इत्येषामपरागहेतवः ।

राजा । आर्य्य ! एवमेतेषु परिज्ञातापरागहेतुष्वपि क्षिप्रमेव कस्मान्न प्रतिविहितमार्य्येण ?

चाण । वृषल ! न पारितं प्रतिविधातुम् ।

राजा । किमकौशलात्, उत प्रयोजनापेक्षितया ?

चाण । कथमकौशलं भविष्यति, नियतं प्रयोजनापेक्षितया ।

राजा । तदप्रतिविधानप्रयोजनमिदानीं श्रोतुमिच्छामि ।

चाण । वृषल ! श्रूयतामवधार्य्यताञ्च ।

राजा । उभयमपि क्रियते, कथ्यताम् ।

चाण । वृषल ! इह खलु विरक्तानां प्रकृतीनां द्विविधं प्रतिविधानम् । तद्यथा, अनुग्रहो निग्रहश्चेति । अनुग्रहस्तावदाक्षिप्ताधिकारयोर्भद्रभटपुरुषदत्तयोः पुनरधिकारारोपणमेव । अधिकारश्च पुनस्तादृशेषु व्यसनदोषादनभियुक्तेषु पुनरारोप्यमाणः, सकलस्यैव राज्यस्य मूलं हस्त्यश्वमवसादयति (ह) । हिङ्गुरातबलगुप्तयोरत्यन्तलुब्धप्रकृतिकयोः

---

(ह) आक्षिप्ताधिकारयोः आक्षिप्तः आच्छिन्नः अधिकारः ययोः तयोः । अधिकारारोपणम् अधिकारे स्थापनम् । व्यसनदोषात् स्त्रीमद्य-मृगयाद्यासक्तिदोषात् । अनभियुक्तेषु स्वकार्य्येषु अनवहितेषु अयोग्येषु इत्यर्थः । अवसादयति नाशं प्रापयति ।

सकलराज्यसम्प्रदानेनाप्यपरितुष्यतोरनुग्रहः कथं कर्त्तुं शक्यते ? राजसेनभागुरायणयोस्तु स्वधनप्राणनाशभीतयोः कुतोऽनुग्रहस्यावकाशः ? रोहिताक्षविजयवर्म्मणोरपि दायाद्यमानप्रदान[दह्यमानयोः]पीड़ितयोर्मानमप्यपमानं मन्यमानयोः, अत्यन्तमानिनोः कीदृशोऽनुग्रहः प्रीतिं जनयिष्यतीति, परिहृतः पूर्व्वः पक्षः। उत्तरोऽपि (च) खलु वयमचिरादधिगतनन्दैश्वर्य्याः सहोत्थायिनं प्रधानपुरुषवर्गमुग्रेण दण्डेन पीड़यन्तो, नन्दकुलानुरक्तानां प्रकृतीनामविश्वास्या मा [ भूम ] भवाम इत्यतः परिहृत एव। तदेवमनुगृहीतास्मद्भृत्यपक्षो राक्षसोपदेशश्रवणप्रवणो महीयसा म्लेच्छराजबलेन परिवृतः, पितृवधामर्षितः पर्व्वतकपुत्रो मलयकेतुरस्मानभियोक्तुमुद्यत इति, सोऽयं व्यायामकालो (क) नोत्सवकाल इति। अतो दुर्गसंस्कारे आरब्धव्ये किं कौमुदीमहोत्सवेनेति प्रतिषिद्धः।

राजा। आर्य्य ! बहु प्रष्टव्यमत्र।

चाण। वृषल ! विस्रब्धं पृच्छ, ममापि बह्वाख्येयमत्र (ख)।

---

(च) पूर्वः पक्षः अनुपकृपक्षः परिहृतः परित्यक्तः। उत्तरोऽपि निपकृरूपः पक्ष इत्यर्थः।

(क) अनुगृहीतास्मद्भृत्यपक्षः अनुगृहीतः अनुकम्पया अवलम्बितः अस्मद्भृत्यपक्षः भद्रभटादिवर्गो येन तादृशः। व्यायामकालः व्यायामस्य विग्रिष्टायामस्य सैन्यसग्रहदुर्गसंस्कारादिरूपस्य कालः समयः।

(ख) आख्येयं वक्तव्यम्।

राजा। एष पृच्छामि।

चाण। अहमप्येष कथयामि।

राजा। योऽयमस्माकमस्य सर्व्वस्यैवानर्थहेतुर्मलयकेतुः, स कस्मादार्येणापक्रामन्नुपेक्षितः?

चाण। वृषल! मलयकेतोरपक्रमणानुपेक्षणे द्वयी गतिः (ग) स्यात्; अनुगृह्येत निगृह्येत वा। अनुग्रहे पूर्वप्रतिश्रुतं राज्यार्द्धं प्रतिपाद्येत। निग्रहे तावदस्य, पर्वतकोऽस्माभिर्व्यापादित इति कृतघ्नतायाः स्वयं हस्तो दत्तः स्यात् (घ)। प्रतिश्रुतार्द्धराज्यप्रतिपादनेऽपि पर्वतकविनाशः केवलं कृतघ्नतामात्रफलः स्यात् इति मलयकेतुरपक्रामन्नुपेक्षितः।

राजा। आर्य्य! अत्र तावदेवम् (ङ)। राक्षसः पुनरिहैवान्तर्नगरे वर्त्तमान आर्य्येणोपेक्षित इत्यत्र किमुत्तरमार्य्यस्य?

---

(ग) अपक्रमणानुपेक्षणे अपक्रमणस्य इतः पलायनस्य अनुपेक्षणे उपेक्षाविरहे उपेक्षायाम् अकृतायामित्यर्थः। द्वयी द्विविधा गतिः उपायः, द्विविधयोर्गत्योरेकतरा आश्रयणीया स्यादित्यर्थः।

(घ) कृतघ्नतायाः कृतोपकारस्य अपकारित्वरूपायाः स्वयम् आत्मनैव हस्तः हस्तावलम्बनं दत्तः स्यात्, अस्माभिः पर्वतको हत इति कृतघ्नतापवादः प्राप्तहस्तावलम्बन इव समुत्तिष्ठेदित्यर्थः।

(ङ) अत्र तावदेवम् उत्तरमिति शेषः। अन्तर्नगरे नगरान्तरे नगरमध्ये इत्यर्थः।

चाण। वृषल! राक्षसोऽपि खलु निजस्वामिनि स्थिरानुरागित्वात् सुचिरमेवात्र सहवासाच्च शीलज्ञानां नन्दानुरक्तानां प्रकृतीनामत्यन्तं विश्वास्यः, प्रज्ञापुरुषकाराभ्यामुपेतः, सहायसम्पदा युक्तः, कोषबलवानिहैवान्तर्नगरे वर्त्तमानो महान्तं खल्वन्तःकोपमुत्पादयेत्। दूरीकृतस्तु, वाह्यकोपमुत्पादयन्नपि (च) न दुःखसाध्यो भविष्यतीत्यतोऽपक्रामन्नुपेक्षितः।

राजा। तत् किमर्थमिहस्थ एवोपायैर्नोपक्रान्तः (छ)?

चाण। अथ कथमपक्रान्तो भविष्यति। ननूपायैरेवासौ हृदयेशयः शङ्कुरिवोद्धृत्य दूरीकृतः (ज)। दूरीकरणस्य चोक्तं प्रयोजनम्।

राजा। आर्य्य! कस्माद्विक्रम्य न गृहीतः?

चाण। वृषल! राक्षसः खल्वसौ विक्रम्य निगृह्यमाणः स्वयं वा विनश्येत्, युष्मद्बलानि वा विनाशयेत्। एवं सत्युभयथापि दोषः। पश्य,

स हि भृशमभियुक्तो यद्युपेयाद्विनाशं,
ननु वृषल! वि[यु]मुक्तस्तादृशेनापि पुंसा।

---

(च) शीलज्ञानां सच्चरित्रविदाम्। प्रज्ञापुरुषकाराभ्यां बुद्धिपौरुषाभ्याम्। अन्तःकोपम् आभ्यन्तरिकविद्वेषम्। वाह्यकोपं बहिर्विद्वेषम्।

(छ) उपक्रान्तः वेष्टितः वशीकर्त्तुमिति शेषः।

(ज) कथमपक्रान्तः अपक्रम्य गतः भविष्यतीति उपायैरेव असौ हृदयेशयः हृदयविद्धः शङ्कुः कील इव उद्धृत्य दूरीकृतः अपसारितः।

अथ तव बलमुख्यान् नाशयेत्, सापि पीड़ा,
नवगज इव तस्मात् सोऽभ्युपायैर्विनेयः ॥ २५ ॥

राजा। न शक्नुमो वयमार्य्यस्य वाचा वाचमतिशयितुं, सर्वथा अमात्यराक्षस एवात्र प्रशस्यतरः (भ)।

चाण। सक्रोधम्। न भवानिति वाक्यशेषः। मा तावदेवम्। भो वृषल! तेन किं कृतम्?

राजा। यदि न ज्ञायते, तदा श्रूयताम्। तेन खलु महात्मना,

लब्धायां पुरि यावदिच्छमुषितं कृत्वा, पदं नो गले
व्याघातो जयघोषणादिषु बलादस्मद्दलानां कृतः।
अत्यर्थं विपुलैः सुनीतिविभवैः संमोहमापादिता
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः ॥ २६ ॥

---

(२५) स इति। स राक्षसः भृशम् अतिमात्रम् अभियुक्तः अस्मद्बलैः आक्रान्तः सन् यदि विनाशम् उपेयात् प्राप्नुयात्, ननु वृषल! हे मौर्य्य! तादृशेन प्रभुशक्त्यतिशयशालिना पुंसा वियुक्तः विरहितः त्वमिति भवेरिति च अध्याहार्य्यम्। अथ यदि तव बलमुख्यान् प्रधानबलानि नाशयेत् सापि पीड़ा क्षतिः, तस्मात् नवगजः नवबद्धः गज इव स राक्षसः अभ्युपायैः सामादिभिः विनेयः दम्यः वशीकार्य्यः। मालिनीवृत्तम्।

(भ) प्रशस्यतरः श्रेष्ठः।

(२६) लब्धायामिति। लब्धायाम् अस्माभिरिति शेषः अधिकृतायां पुरि राजधान्यां कुसुमपुरे इत्यर्थः नः अस्माकं गले पादं कृत्वा दत्त्वा यावदिच्छं यावत्कालस्तस्य इच्छा इत्यर्थः उषितं स्थितं, तथा अस्मद्-

चाण । विहस्य । वृषल ! एतत् कृतं राक्षसेन ?

राजा । अथ किम् । एतत् कृतममात्यराक्षसेन ।

चाण । वृषल ! मया पुनर्ज्ञातं, नन्दमिव भवन्तमुद्धृत्य, भवानिव भूतले मलयकेतुरधिराज्यमारोपितः ।

राजा । अलमुपालभ्य (ञ) । आर्य्य ! दैवेनेदमनुष्ठितं, किमत्रार्य्यस्य ।

चाण । हे मत्सरिन् ! (ट) ।

आरुह्यारूढ़कोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूड़ां,
लोकप्रत्यक्षमुग्रां, सकलरिपुकुलोच्छेददीर्घां प्रतिज्ञाम् ।
केनान्येनावलिप्ता नवनवतिशतद्रव्यकोटीश्वरास्ते,
नन्दाः, पर्य्यायभूताः पशव इव हताः पश्यतो राक्षसस्य ॥२७

---

वलानां जयघोषणादिषु बलात् स्वबलमाश्रित्य व्याघातः कृतः । येन इत्युक्तम्, अत्यर्थं विपुलैः महद्भिः सुनीतिविभवैः सुनयकौशलैः मोहं संशयम् आपादिता प्रापिता नः अस्माकं मतयः बुद्धयः विश्वास्येषु अपि स्वेषु निजेषु वर्गेषु पक्षेषु न विश्वसन्ति । शार्दूलविक्रीडितं वृत्तम् ।

(ञ) अलमुपालभ्य अलं तिरस्कारेण तिरस्कारं मा कुरु इत्यर्थः ।

(ट) मत्सरिन् मत्सरोऽन्यशुभद्वेषः सः अस्यास्तीति तत्सम्बोधने ।

(२७) आरुह्येति । आरूढ़स्य जातस्य कोपस्य स्फुरणेन विषमितया कुटिलया अग्राङ्गुल्या अङ्गुल्यग्रभागेन मुक्ता बन्धनात् मुक्ता व्याविता चूड़ा शिखा यत्र तां, लोकप्रत्यक्षं सकलरिपुकुलोच्छेददीर्घां सकलानां रिपुकुलानां सपुत्रनन्दवंशानाम् उच्छेदेन दीर्घाम् अतिमहतीम् अत एव उग्रां दारुणां प्रतिज्ञाम् आरुह्य आश्रित्य कृत्वेति यावत् केन अन्येन मद्व्यतिरिक्तेन जनेन पश्यतः राक्षसस्य अनादरे षष्ठी पश्यन्तं राक्षसमनादृत्य इत्यर्थः नवनवतिशतद्रव्यकोटीश्वराः प्रचुरैश्वर्यशालिन

अपिच,

गृध्रैराबद्धचक्रं वियति चलनया दीर्घनिष्कम्पपक्षै-
र्धूमैर्ध्वस्तार्कभासां सघनमिव दिशां मण्डलं दर्शयन्तः ।
नन्दानां नन्दयन्तः पितृवननिलयान् प्राणिनः पश्य, चैतान्
निर्वान्त्यद्यापि नैते स्रुतबहलवसावाहिनो हव्यवाहाः ॥२८॥

राजा । अन्येनैवेदमनुष्ठितम् ।

चाण । केन ?

राजा । नन्दकुलविद्वेषिणा दैवेनेदमनुष्ठितम् ।

चाण । दैवमविद्वांसः प्रमाणयन्ति (ठ) ।

राजा । विद्वांसोऽप्यविकत्थना भवन्ति ।

चाणं । क्रोधं नाटयन् वृषल ! वृषल ! भृत्यमिव मामा-
रोढुमिच्छसि ?

---

इत्यर्थः अत एव अवच्छिन्नाः गर्वपूर्णाः ते प्रसिद्धाः नव नन्दाः पर्याय-
भूताः पशव इव हताः नाशिताः न केनापीत्यर्थः । स्रग्धराहत्तम् ।

(२८) गृध्रैरिति । दीर्घनिष्कम्पपक्षैः दीर्घाः निष्कम्पाः निश्चलाः
पक्षाः येषां तैः गृध्रैः वियति आकाशे आबद्धचक्रं रचितचक्राकार-
वेष्टनं यथा तथा चलनया गत्या धूमैः चिताग्निधूमैः ध्वस्तार्कभासां
तिरोहितसूर्य्यकिरणानां दिशां मण्डलं सघनं समेघमिव दर्शयन्तः
एतान् पितृवननिलयान् श्मशानवासिनः प्राणिनः नन्दयन्तः हर्षयन्तः
नन्दानां नवानां स्रुतबहलवसावाहिनः देहनिःसृतप्रचुरहृन्मेद-
धारिणः एते पुरो दृश्यमानाः हव्यवाहाः चिताग्नयः अद्यापि न
निर्वान्ति निर्वाणं प्राप्नुवन्ति पश्य अवलोकय । स्रग्धराहत्तम् ।

(ठ) प्रमाणयन्ति प्रमाणीकुर्वन्ति कार्य्यसाधनतयेति शेषः ।

शिखां मोक्तुं बद्धामपि पुनरयं धावति करः—

भूमौ पादप्रहारं दत्त्वा ।

प्रतिज्ञामारोढुं पुनरपि चलत्येष चरणः ।
प्रणाशान्नन्दानां प्रशममुपयातं त्वमधुना
परीतः कालेन, ज्वलयसि पुनः क्रोधदहनम् ॥ २९ ॥

राजा । सावेगं स्वगतम् । अये ! तत् कथं सत्यमेव कुपित आर्य्यः । तथाहि,

संरम्भस्पन्दिपक्ष्मक्षरदमलजलक्षालनक्षामयापि
भ्रूभङ्गोद्भेद(द्भूत)धूमं ज्वलितमिव पुनः पिङ्गया नेत्रभासा ।
मन्ये, रुद्रस्य रौद्रं रसमभिनयतस्ताण्डवे संस्मरन्त्या,
सञ्जातोदग्रकम्पं कथमपि धरया धारितः पादघातः ॥३०॥

---

(२९) शिखामिति । शिखां बद्धामपि प्रतिज्ञापारगमनादिति भावः मोक्तुं स्खलयितुम् अयं करः पुनः धावति । एष चरणः प्रतिज्ञाम् आरोढुं कर्तुं पुनः चलति । अधुना कालेन मृत्युना परीतः प्राप्तस्त्वं नन्दानां प्रणाशात् दाह्याभावादिति भावः प्रशमं शान्तिम् उपयातं मम क्रोधदहनं कोपाग्निं पुनः ज्वलयसि उद्दीपयसि । शिखरिणीवृत्तम् ।

(३०) संरम्भेति । ताण्डवे नृत्ये संरम्भात् कोपात् "संरम्भः सम्भ्रमे कोपे" इति कोषः । स्पन्दिनः चलतः पक्ष्मणः नेत्रलोम्नः क्षरतः निःसरतः अमलजलस्य अम्बुनः क्षालनेन क्षामया क्षीणया अपि पिङ्गया नेत्रभासा नयनकान्त्या भ्रूभङ्गोद्भेदधूमं भ्रुवो भङ्गः भ्रूभङ्गः भ्रूकुटिः तस्य उद्भेद एव धूमः यस्य तादृशं ज्वलितमिव अग्निमिति ध्वनिः रौद्रं रसम् अभिनयतः दर्शयतः रुद्रस्य कर्मणि षष्ठी संस्मरन्त्या धरया पृथिव्या पादघातः चाणक्यकृतः पादप्रहारः सञ्जातोदग्रकम्पं सञ्जातः उत्पन्नः उदग्रः महान् कम्पो यत्र तत् यथा तथा धारितः इति मन्ये सम्भावयामि । स्रग्धरावृत्तम् ।

चाण। कृतकं कोपं संहृत्य। वृषल! वृषल! अलमुत्तरोत्तरेण। यद्यस्मत्तो वीरयान् राक्षसोऽवगम्यते, तस्मादिदं शस्त्रं तस्मै दीयतामिति। शस्त्रमुत्सृज्योत्थाय च प्रत्यक्षवदाकाशे लक्ष्यं बद्धा स्वगतम्। राक्षस! राक्षस! एष एव भवतः कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः।

चाणक्यतः स्खलितभक्तिमहं सुखेन
जेष्यामि मौर्य्यमिति सम्प्रति यः प्रयुक्तः।
भेदः, किलैष भवता सकलः, स एव
सम्पत्स्यते, शठ! तवैव विनाशनाय॥ २१॥

इति निष्क्रान्तश्चाणक्यः।

राजा। आर्य्य! वैहीनरे! अद्य प्रभृति अनादृत्य चाणक्यं, चन्द्रगुप्तः स्वयमेव राज्यकार्य्याणि करिष्यतीति गृहीतार्थाः प्रकृतयः क्रियन्ताम्।

कञ्चु। स्वगतम्। कथं निरुपपद एव (ड) चाणक्यो नार्य्यचाणक्य इति। हन्त, सत्यमेव हृतोऽधिकारः। अथवा, न खल्वत्र वस्तुनि देवं दोषेणावगन्तुमर्हामि।

---

(२१) चाणक्यत इति। हे शठ! धूर्त्त! अहं चाणक्यतः स्खलितभक्तिं च्युतानुरागं मौर्य्यं सुखेन जेष्यामि इति भवता य एषः सकलः सम्पूर्णः भेदः प्रयुक्तः कृतः, स एव तवैव विनाशनाय पराभवाय सम्पत्स्यते परिणंस्यते। वसन्ततिलकं वृत्तम्।

(ड) निरुपपदः नास्ति उपपदं सन्निहितपदं यस्य सः उपपदशून्यः आर्य्यादिगौरवसूचकपदशून्य इत्यर्थः।

स दोषः सचिवस्यैव, यदसत् कुरुते नृपः ।
याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥ ३२ ॥

राजा । आर्य्य ! किं विचारयसि ?

कञ्चु । देव ! न किञ्चिद् विचारयामि, किन्त्वेतद् विज्ञापयामि, दिष्ट्या देव इदानीं देवः संवृत्त इति (ढ) ।

राजा । आत्मगतम् । एवमस्मासु निगृह्यमाणेषु स्वकार्य्य-सिद्धिकामः, सकामो (ण) भवत्वार्य्यः । प्रकाशम् । शोणोत्तरे ! अनेन शुष्ककलहेन शिरोवेदना मां बाधते, तच्छयनगृहमादेशय ।

प्रती । एदु एदु महाराओ (२) ।

राजा । आसनादुत्थायात्मगतम् ।

आर्य्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमवनेर्विवरं प्रवृत्ता ।

---

(२) एतु एतु महाराजः ।

---

(३२) स दोष इति । नृपः यत् असत् कुरुते आचरति, स असदाचरणं विधेयप्राधान्यात् पुंस्त्वम् । सचिवस्य मन्त्रिण एव दोषः नतु नृपस्य । तथाहि, गजः यन्तुः निषादिनः प्रमादेन अनवधानेन व्यालत्ववाच्यतां दुष्टतापवादं याति प्राप्नोति, मन्त्रिणा राजा कुपथगमनात् निवारयितव्यः तदकरणे तस्यैव दोषभागित्वं नतु राज्ञ इति भावः । अनुष्टुप्वृत्तम् ।

(ढ) देवः संवृत्तः देवपदवाच्यः जात इत्यर्थः, पराधीनताया मुक्तत्वादिति भावः ।

(ण) सकामः सफलमनोरथः ।

ये सत्यमेव न गुरून् प्रतिमानयन्ति
तेषां कथं नु हृदयं न भिनत्ति लज्जा ॥ ३३ ॥

इति निष्क्रान्ताः सर्वे। इति तृतीयोऽङ्कः।

---

# चतुर्थोऽङ्कः।

ततः प्रविशत्यध्वगवेशः पुरुषः।

पुरु। ह्वीमाणहे ह्वीमाणहे (क)।
जोअणसअं समधिअं को णाम गदागदं इह करेइ।
अत्थाणगमणगुरुई पहुणो अण्णा जइ ण होइ (१) ॥ १ ॥

---

(१) योजनशतं समधिकं को नाम गतागतमिह करोति।
अस्थानगमनगुरुका प्रभोराज्ञा यदि न भवति ॥

---

(३३) आर्याज्ञयेति। आर्यस्य चाणक्यस्य आज्ञया एव आदेशेनैव ननु स्वबुद्ध्या लङ्घितगौरवस्य लङ्घितम् अतिक्रान्तं गौरवं सम्माननं येन तादृशस्य मम बुद्धिः अवनेः पृथिव्याः विवरं प्रवेष्टुं प्रवृत्ता उद्यता। ये तु सत्यमेव गुरून् न प्रतिमानयन्ति नाद्रियन्ते, नु वितर्के। लज्जा तेषां हृदयं कथं न भिनत्ति न विदारयति अपितु विदारयत्येवेति तर्कयामीत्यर्थः। वसन्ततिलकं वृत्तम्।

---

(क) ह्वीमाणहे इति आश्चर्यसूचकनिपातः अतिशयद्योतनाय द्विरुक्तः।

(१) योजनशतमिति। अस्थाने अयोग्यस्थाने गमनेन गुरुका गुर्वी अनुल्लङ्घनीया इत्यर्थः प्रभोः आज्ञा यदि न भवति, तदा को

ता जाव अमच्चरक्खसस्स ज्जेव गेहं गच्छामि। परिश्रान्तवत् परिक्रम्य। भो! को एत्थ दुआरिआणं? णिवेदेह दाव भट्टिणो अमच्चरक्खसस्स, एसो क्खु करहको करहका (ख) विअ कज्जं तुवरन्तो पाटलिपुत्तादो आगदो त्ति (२)।

प्रविश्य दौवारिकः। भद्द! मा उच्चं मन्तेहि। एसो क्खु भट्टा अमच्चरक्खसो रज्जचिन्ताजणिदेण जाअरेण समुप्पस्ससीसवेअणो, अज्ज वि दाव ण सअणदलं मुञ्चदि, ता चिट्ठ दाव मुहुत्तअं, जाव से लद्धावसरो भविअ, भवदो आगमणं णिवेदेमि (३)।

पुरु। भद्दमुह! जधा दे रोअदि [तधा करेहि](४)।

ततः प्रविशति शयनगत आसनगतेन शकटदासेनानुगम्यमानश्चिन्तितो राक्षसः।

---

(२) तद् यावत् अमात्यराक्षसस्यैव गेहं गच्छामि। भोः! कोऽत्र दौवारिकाणाम्? निवेदय तावद् भर्तुरमात्यराक्षसस्य, एष खलु करभकः करभक इव कार्यं त्वरयन् पाटलिपुत्रादागत इति।

(३) भद्र! मा उच्चं मन्त्रय। एष खलु भर्ता अमात्यराक्षसः राज्यकार्य्यचिन्ताजनितेन जागरेण समुत्पन्नशीर्षवेदनोऽद्यापि तावत् न शयनतलं मुञ्चति, तस्मात् तिष्ठ तावन्मुहूर्त्तं, यावत् तस्य लब्धावसरो भूत्वा, भवत आगमनं निवेदयामि।

(४) भद्रमुख! यथा ते रोचते। अधिकपाठे [तथा कुरु]।

---

जनः इह अस्मिन् जगति समधिकं योजनशतं व्याप्य गतागतं करोति नाम सम्भावनायां, न कोऽपि करोतीति सम्भावयामीत्यर्थः।

(ख) करभक इव करिशावक इव।

राक्ष । आत्मगतम् ।

मम विमृशतः कार्य्यारम्भे विधेरविधेयतां
सहजकुटिलां कौटिल्यस्य प्रचिन्तयतो मतिम् ।
अथच विहते तत्कृत्यानां निकाममुपग्रहे,
कथमिदमिहेत्युन्निद्रस्य प्रयान्त्यनिशं निशाः ॥ २ ॥

अपिच,

कार्य्योपक्षेपमादौ, तनुमपि रचयंस्तस्य विस्तारमिच्छन्,
वीजानां गर्भितानां फलमतिगहनं गूढ़मुद्भेदयंश्च ।
कुर्वन् बुद्ध्या विमर्षं प्रसृतमपि, पुनः संहरन् कार्य्यजातं,
कर्त्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा ॥ ३ ॥

---

(२) ममेति । कार्य्यारम्भे विधेः दैवस्य अविधेयताम् अवश्यतां विमृशतः सर्वं दैवस्यैवाधीनं नतु दैवं कस्यापीति चिन्तयत इत्यर्थः, तथा सहजकुटिलां स्वभाववक्रां दुरधिगमामित्यर्थः कौटिल्यस्य मतिं प्रविचिन्तयतः तदुद्भावितान् विषयान् दृष्ट्वा तर्कयतः, अथ तत्कृत्यानां तस्य चाणक्यस्य कृत्यानां कार्य्याणाम् अस्मासु प्रयुक्तानामिति भावः, उपग्रहे प्रतीकारे अस्माभिः कृते इति शेषः, निकामं सम्यक् विहते चाणक्येन स्वबुद्ध्या विनाशिते सति इदं कथं केन प्रकारेण साधितमिति चिन्तया उन्निद्रस्य निद्रारहितस्य मम इह निशाः रजन्यः अनिशं प्रयान्ति गच्छन्ति । हरिणीवृत्तम् ।

(३) नाटकप्रणयनसाम्येन स्वकृत्यं वर्णयति कार्य्योपक्षेपमिति । आदौ प्रथमं तनुमपि स्वल्पमपि कार्य्यस्य शत्रुजयादिरूपस्य उपक्षेपम् उपायं रचयन् प्रयुञ्जानः, पक्षान्तरे कार्य्यस्य अभिनेयार्थस्य उपक्षेपं "काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतम्" इत्युक्तलक्षणं प्रस्तावनारूपमित्यर्थः रचयन् प्रणयन्, ततः तस्य कार्य्यस्य विस्तारं बाहुल्यमिच्छन्, अथ गर्भितानां

तदपि नाम दुरात्मा चाणक्यवटुः—

उपसृत्य दौवारिकः। जअदु जअदु (५)।

राक्ष। अभिसन्धातु (ग) शक्यः स्यात्—

दौवा। अमच्चो (६)।

राक्ष। वामाक्षिस्पन्दं सूचयित्वा आत्मगतम्। चाणक्यवटुर्जयति। अभिसन्धातुं शक्यः स्यादमात्य इति वामाक्षि-

(५) जयतु जयतु।

(६) अमात्यः।

जातगर्भाणां फलजननोन्मुखानामित्यर्थः वीजानां साधनानां गूढं प्रागनभिव्यक्तत्वात् गुप्तं फलम् अतिगहनं यथा तथा उद्भेदयन् प्रकटयन्; अन्यत्र गर्भितानां जातगर्भाणां "फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन। गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः॥" इत्युक्तलक्षणगर्भवतां वीजानाम् "अल्पमात्रं समुद्दिष्टं बहुधा यद् विसर्पति। फलस्य प्रथमोपायो वीजमित्यभिधीयते॥" इत्युक्तलक्षणानां फलप्रदानहेतूनाम् अतिगहनं दुर्बोधं फलं गूढं यथा तथा उद्भेदयन् कार्य्यरूपेण प्रकाशयन्, बुद्ध्या विमर्शम् इतिकर्त्तव्यतालोचनं कुर्वन्, तथा प्रसृतं विस्तृतमपि कार्य्यजातं संहरन् सङ्कोचयन्, अन्यत्र प्रसृतं विस्तृतं कार्य्यजातं बुद्ध्या विमर्शं "यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः। शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः॥" इत्युक्तलक्षणं कुर्वन्, तथा संहरन् "वीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्। ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत्॥" इत्युक्तलक्षणनिर्वहणरूपमुपसंहारं कुर्वन्, अस्मद्विधो वा नाटकानां कर्त्ता प्रणेता वा इमं वर्णितरूपं क्लेशम् अनुभवति प्राप्नोति। स्रग्धरावृत्तम्।

(ग) अभिसन्धातुं प्रतारयितुम्।

स्यन्दनेन प्रस्तावगतं प्रतिपादयति। [तथापि नोद्यमस्त्याज्यः]

प्रकाशम्। भद्र! किमसि वक्तुकामः?

दौवा। अमच्च! एसो क्खु करहओ पाडलिपुत्तादो आअदो, इच्छदि अमच्चं पेक्खिदुं (७)।

राक्ष। अवारितं प्रवेशयैनम्।

दौवा। जं अमच्चो आणवेदि त्ति। निष्क्रम्य पुरुषमुपसृत्य। भद्द! एसो क्खु अमच्चो चिट्ठदि, ता उपसप्प णं (८)। इति निष्क्रान्तो दौवारिकः।

कर। राक्षसमुपसृत्य। जअदु जअदु अमच्चो (९)।

राक्ष। नाट्येनावलोक्य। भद्र! करभक! स्वागतमुपविश्यताम्।

कर। जं अमच्चो आणवेदि त्ति (१०)। भूमावुपविशति।

राक्ष। स्वगतम्। अथ कस्मिन् प्रयोजने मयाऽयं प्रणिधिः प्रहित इति, प्रभूतत्वात् (घ)प्रयोजनानां न खल्ववधारयामि। इति चिन्तां नाटयति।

---

(७) अमात्य! एष खलु करभकः पाटलिपुत्रादागतः, इच्छति अमात्यं प्रेक्षितुम्।

(८) यदमात्य आज्ञापयतीति। भद्र! एष खलु अमात्यस्तिष्ठति, तदुपसर्प एनम्।

(९) जयतु जयतु अमात्यः।

(१०) यदमात्य आज्ञापयतीति।

---

(घ) प्रभूतत्वात् बाहुल्यात्।

ततः प्रविशति वेत्रपाणिरपरः पुरुषः।

पुरु। ओसलध अज्जा! ओसलध। अवेध माणहे! अवेध। (ङ) किं ण पेक्खध?

दूले पच्चासत्ती दंसणमवि दुल्लहं अधण्णेहिं।

कल्लाणकुलघलाणं देवाणच्च भूमिदेवाणं (११) ॥ ४ ॥

आकाशे। अज्जा! किं भणाध, किंणिमित्तं एसा ओसालणा कलीअदि? अज्जा! एसो क्खु कुमाले मलयकेदु, समुप्पण्णसीसवेअणं अमच्चरक्खसं सुणिअ, पेक्खिदुं इह ज्जेव आअच्छदि। एदिणा कालणेण ओसालणा कलीअदि (१२)। इति निष्क्रान्तः पुरुषः।

ततः प्रविशति भागुरायणेन सह कञ्चुकिनानुगम्यमानो मलयकेतुः।

---

(११) अपसरत हे आर्य्याः! अपसरत। अपेत हे मान्याः! अपेत। किं न पश्यत?

दूरे प्रत्यासत्तिर्दर्शनमपि दुर्लभमधन्यैः।

कल्याणकुलगृहाणां देवानाञ्च भूमिदेवानाम् ॥

(१२) हे आर्य्याः! किं भणथ, किंनिमित्तमेषा अपसारणा क्रियते? आर्य्याः! एष खलु कुमारो मलयकेतुः, समुत्पन्नशीर्षवेदनममात्यराक्षसं श्रुत्वा, प्रेक्षितुम् इत एव आगच्छति। एतेन कारणेन अपसारणा क्रियते।

---

(ङ) अपेत अपगच्छत।

(४) दूर इति। कल्याणकुलगृहाणां मङ्गलालयानां देवानां भूमिदेवानां राज्ञाञ्च प्रत्यासत्तिः नैकट्यसम्बन्धः दूरे आस्तामिति शेषः, अधन्यैः अपुण्यवद्भिः दर्शनमपि दुर्लभम्।

भद्र । निश्वस्यात्मगतम् । अद्य दशमो मासस्तातस्योपरतस्य । नचास्माभिर्वृथा पुरुषाभिमानकारमुद्वहद्भिस्तमुद्दिश्य, तोयाञ्जलिरप्यावर्जितः (च) । अथवा, प्रतिज्ञातमेतत् पुरस्तात् ।

वक्षस्ताड़नभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं
हाहेत्युच्चरितार्त्तनादकरुणं भूरेणुरूक्षालकम् ।
तादृङ्मातृजनस्य शोकजनितं सम्प्रत्यवस्थान्तरं,
शत्रुस्त्रीषु मया विधाय गुरवे देयो निवापाञ्जलिः ॥ ५ ॥

तत् किमिह बहुना ।

उद्यच्छता धुरमकापुरुषानुरूपां
गन्तव्यमाजिविहितेन पितुः पथा वा ।
आच्छिद्य वा स्वजननीजनलोचनेभ्यो
नेयो मया रिपुवधूनयनानि बाष्पः ॥ ६ ॥

---

(च) आवर्ज्जितः दत्तः ।

(५) वक्ष इति । मया मातृजनस्य शोकजनितं तादृक् अवस्थान्तरं दशाविशेषं सम्प्रति शत्रुस्त्रीषु विधाय गुरवे पित्रे निवापाञ्जलिः "पितृदानं निवापः स्यात्" इत्युक्तमाद्याङ्ग' जलाञ्जलिः देयः । अवस्थान्तरं विशिनष्टि वक्ष इत्यादिना विशेषणचतुष्टयेन । वक्षस्ताड़नेन भिन्नानि भग्नानि रत्नवलयानि यत्र तादृशं, तथा भ्रष्टं स्वस्थानात् स्खलितम् उत्तरीयांशुकम् उत्तरीयवस्त्रं यस्मिन् तत् तथा, हाहा इति उच्चरितेन आर्त्तनादेन करुणं दीनं तथा भूरेणुभिः धूलिभिः रूक्षा अलकाः चूर्णकुन्तलाः यत्र तथोक्तम् "अलकाश्चूर्णकुन्तलाः" इत्यमरः । शार्दूलविक्रीड़ितं वृत्तम् ।

(६) उद्यच्छतेति । मया अकापुरुषानुरूपां धीरजनोचितां धुरं

प्रकाशम्। आर्य्य ! जाजले ! उच्यन्तामस्मद्वचनादनुयायिनो राजानः, एक एवाहममात्यराक्षसस्यातर्कितागमनेन (ख) प्रीतिमुत्पादयितुमिच्छामि, अतः कृतमनुगमनक्लेशेनेति।

कञ्चु०। यदाज्ञापयति कुमारः। परिक्रम्याकाशे। भो भो राजानः ! कुमारः समाज्ञापयति, न खल्वहं केनचिदनुगन्तव्यः। इति विलोक्य सहर्षम्। कुमार ! कुमार ! एते भवदाज्ञासमनन्तरमेव प्रतिनिवृत्ताः सर्व एव राजानः। पश्यतु कुमारः।

सोत्सेधैः स्कन्धदेशैर्मुखरकविकयाकर्षणात्यर्थभुग्नै-
रश्वाः कैश्चिन्निरुद्धाः खमिव खुरपुटैः खण्डयन्तः पुरस्तात्।
केचिन्मातङ्गमुख्यैर्विहतजवतया मूकघण्टैर्निवृत्ता
मर्य्यादां भूमिपाला जलधय इव ते देव ! नोल्लङ्घयन्ति ॥७॥

---

भारम् उद्वयच्छता उद्वहता सता आजिविहितेन रणहतेन पितुः पथा पितृगतेन पथा मरणद्वारेण गन्तव्यं या, स्वजननीजनलोचनेभ्यः स्वमातृजननेत्रेभ्यः आच्छिद्य आकृष्य बाष्पः रिपुवधूनयनानि शत्रुरमणीलोचनानि नेयः या। वसन्ततिलकं वृत्तम्।

(ख) अतर्कितागमनेन सहसोपस्थितेन।

(७) सोत्सेधैरिति। कैश्चित् भूमिपालैः मुखरकविकया मुखरया खलिन्या आकर्षणेन अत्यर्थभुग्नैः अतिवक्रैः सोत्सेधैः उन्नतैः स्कन्धदेशैः उपलक्षिताः विशेषणे तृतीया। तथा खुरपुटैः पुरस्तात् खम् आकाशं खण्डयन्त इव अश्वाः निरुद्धाः। कैश्चित् भूपालाः विहतजवतया विघ्नितवेगतया मूकघण्टैः निःशब्दघण्टारवैः मातङ्गमुख्यैः हस्तीन्द्रैः

मल। आर्य्य ! जाजले ! त्वमपि सपरिजनो निवर्त्तस्व। भागुरायण एक एव मामनुगच्छतु।

कञ्चु। यदाज्ञापयति कुमारः। इति सपरिजनो निष्क्रान्तः।

मल। सखे ! भागुरायण ! विज्ञापितोऽहमिहागच्छद्भिर्भद्रभटप्रभृतिभिः, यथा न वयम् अमात्यराक्षसद्वारेण कुमारमाश्रयामहे, किन्तु कुमारस्य सेनापतिं शिखरसेनं द्वारीकृत्य, दुष्टामात्यपरिगृहीताच्चन्द्रगुप्तादपरक्ताः सन्तः कुमारमाभिरामिकगुण[योगाद्](युक्तमा)श्रयणीयमाश्रयामह इति, (ज) तत्र मया सुचिरमपि विचारयता तेषां वाक्यार्थोऽधिगतः।

भागु। कुमार ! नैवायमत्यन्तदुर्बोधोऽर्थः। पश्य, विजिगीषुरात्मगुणसम्पन्नः प्रियहितद्वारेणाश्रयणीयमाश्रयेदिति ननु न्याय्य एवायम्।

मल। सखे ! भागुरायण ! नन्वस्माकममात्यराक्षसः प्रियतमो हिततमश्च।

भागु। कुमार ! एवमेतत्, किन्तु अमात्यराक्षसश्चाणक्ये बद्धवैरो न तु चन्द्रगुप्ते, तद् यदि कदाचिच्चन्द्रगुप्तश्चाणक्य-

---

यन्ह निवृत्ताः। अतः हे देव ! भूमिपालाः जलधय इव ते तव मर्य्यादां वेलामिव याज्ञां न उल्लङ्घयन्ति न व्यतिक्रामन्ति। स्रग्धरावृत्तम्।

(ज) द्वारीकृत्य आश्रित्य इत्यर्थः। अभिरामिकगुणयोगात् कमनीयगुणयुक्तत्वात्।

मतिजितकार्य्यिनमसहमानः साचिव्यादवरोपयेत्, ततो नन्दकुलभक्त्या नन्दान्वय एवायमिति कृत्वा, संपत्सुहृज्जनापेक्षया च, अमात्यराक्षसश्चन्द्रगुप्तेन सह सन्दधीत। चन्द्रगुप्तोऽपि पितृपारम्पर्य्यागत एवायमिति कृत्वा, सन्धिमनुमन्येत। एवं सत्यस्मास्वपि कुमारो न विश्वसेदित्ययमेषां वाक्यार्थः।

मल। युज्यते। सखे! भागुरायण! अमात्यराक्षसस्य गृहमार्गमादेशय।

भागु। इत इतः कुमारः। इति उभौ परिक्रामतः।

भागु। कुमार! इदममात्यराक्षसस्य गृहं, प्रविशतु कुमारः।

मल। एष प्रविशामि। इति उभौ प्रवेशनं नाटयतः।

राक्ष। आः स्मृतम्। प्रकाशम्। भद्र! अपि दृष्टस्त्वया कुसुमपुरे वैतालिकः स्तनकलसः?

कर। अमच्च! अध इं (१३)।

मल। सखे! भागुरायण! कुसुमपुरवृत्तान्तो वर्त्तते, तन्नोपसर्प्पावः (भ) शृणुवस्तावत् किङ्कारणमिति।

मन्त्रभङ्गभयाद्राज्ञां कथयन्त्यन्यथा पुरः।
अन्यथा विवृतार्थेषु स्वैरालापेषु मन्त्रिणः॥ ८॥

---

(१३) अमात्य! अथ किम्।

---

(भ) नोपसर्प्पावः न समीपं गच्छावः।

(८) मन्त्रभङ्गभयादिति। अन्यथा अन्येन प्रकारेण विवृतः प्रकटितः

भागु। यदाज्ञापयति कुमारः।

राक्ष। भद्र! अपि तत् कार्य्यं सिद्धम्?

कर। अमच्चस्स प्पसाएण सिद्धम् (१४)।

राक्ष। सखे! भागुरायण! किं तत् कार्य्यम्?

भागु। कुमार! गहनः खलु सचिववृत्तान्तो, नैतावता परिच्छेत्तुं शक्यते। अवहितस्तावत् श्रोतुमर्हति कुमारः।

कर। सुणादु अमच्चो, अत्थि दाव अहं अमच्चेणाणत्तो,

राक्ष। भद्र! विस्तरेण श्रोतुमिच्छामि।

जधा, करभअ! करभअ! कुसुमपुरं गच्छिअ, भणिदव्वो मम वअणेण तुए वेतालिओ, थणकलसो, जधा, चाणक्य-हदएण तेसुं तेसुं आणाभङ्गेसुं अणुचिट्ठीअमाणेसुं, चन्दउत्तो समुत्तेअणसमत्थेहिं सिलोएहिं उवसिलोअइदव्वो त्ति (१५) (ज)।

(१४) अमात्यस्य प्रसादेन सिद्धम्।

(१५) शृणोतु अमात्यः, अस्ति तावत् अहममात्येनाज्ञप्तो यथा करभक! करभक! कुसुमपुरं गत्वा मम वचनेन त्वया भणितव्यो वैतालिकः स्तनकलशः यथा चाणक्यहतकेन तेषु तेषु आज्ञाभङ्गेषु अनु-ष्ठीयमानेषु, चन्द्रगुप्तः समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्य इति।

---

अर्थो येषां तादृशेषु स्वैरालापेषु स्वेच्छालापेषु मन्त्रिणः मन्त्रभङ्ग-भयात् मन्त्रितार्थस्य प्रकाशभयात् राज्ञां प्रभूणामपि पुरः समक्षम् अन्यथा प्रकारान्तरेण कथयन्ति। अमात्यस्यैवायं धर्मः यदन्यथास्थितस्य वस्तुनः अन्यथाकथनमिति भावः। अनुष्टुप् वृत्तम्।

(ज) समुत्तेजनसमर्थैः प्रसंदीपनकरैः। उपश्लोकयितव्यः श्लोकेन स्तोतव्यः।

राक्ष । ततस्ततः ?

कर । तदो मए पाडलिउत्तं गच्छिअ, सुणाविदो अमच्चस्स सन्देसो वेतालिओ त्थणकलसो (१६) ।

राक्ष । ततस्ततः ?

कर । एत्थन्तरे णन्दकुलविणासदुम्मणस्स पोरजणस्स परिओसं समुप्पाअन्तेण चन्दउत्तेण आघोसिदो कुसुमउरे कौमुदीमहोस्सवो । सोवि चिरआलपवत्तमाणजणिदपरिओसो अहिमदबन्धुजणसमागमो विअ, ससिणेहं बहुमाणिदो णअरजणेण (१७) ।

राक्ष । सबाष्पम् । हा देव ! नन्द !

कौमुदी कुमुदानन्दे जगदानन्दहेतुना ।
कीदृशी सति चन्द्रेऽपि नृपचन्द्र ! त्वया विना ॥ ८ ॥

---

(१६) ततो मया पाटलिपुत्रं गत्वा, श्रावितः अमात्यस्य सन्देशं वैतालिकः स्तनकलशः ।

(१७) अत्रान्तरे नन्दकुलविनाशदुर्मनसः पौरजनस्य परितोषं समुत्पादयता चन्द्रगुप्तेन आघोषितः कुसुमपुरे कौमुदीमहोत्सवः । सोऽपि चिरकालप्रवर्त्तमानजनितपरितोषः, अभिमतबन्धुजनसमागम इव, सस्नेहं बहुमानितः नगरजनेन ।

---

(८) कौमुदीति । हे नृपचन्द्र ! जगदानन्दहेतुना त्वया विना कुमुदानन्दे कुमुदानां कैरवाणां कुत्सितामोदवताञ्च आनन्दे आनन्दजनने चन्द्रे चन्द्रमसि चन्द्रगुप्ते च सत्यपि कौमुदी ज्योत्स्ना कौमुदीमहोत्सवश्च कीदृशी किंप्रकारा न सुखावहा इत्यर्थः । अनुष्टुप् वृत्तम् ।

भद्र ! ततस्ततः ?

कर । अमच्च ! तदो सो लोअलोअणाणन्दभूदो अणिच्छन्तस्स ज्जेव तधा णाअरजणस्स णिवारिदो चाणक्कहदकेण कौमुदीमहोस्सवो । एत्थन्तरे त्थणकलसेण पउत्ता चन्दउत्तस्स समुत्तेअणसमत्था सिलोअपरिवाठी (१८) ।

राच्च । सहर्षम् । साधु सखे ! स्तनकलस ! साधु । काले भेदबीजमुप्तमवश्यमेव फलमुपदर्शयिष्यति । यतः,

सद्यः क्रीड़ारसच्छेदं प्राकृतोऽपि न मर्षयेत् ।
किमु लोकाधिकं धाम बिभ्राणः पृथिवीभुजः[पतिः] ॥१०॥

मल । एवमेतत् । सद्यः क्रीडेत्यादि पुनः पठति ।

राच्च । ततस्ततः ?

कर । तदो, चन्दउत्तेण आणाभङ्गकलुसिदहिअएण, सुइरं अमच्चगुणं प्पसंसिअ प्पभंसिओ अहिआरादो चाणक्कहदओ (१९) ।

---

(१८) अमात्य ! ततः स लोकलोचनानन्दभूतोऽनिच्छत एव तथा नागरजनस्य निवारितश्चाणक्यहतकेन कौमुदीमहोत्सवः । अत्रान्तरे स्तनकलशेन प्रवर्त्तिता चन्द्रगुप्तस्य संमुत्तेजनसमर्था श्लोकपरिपाटी ।

(१९) ततश्चन्द्रगुप्तेनाज्ञाभङ्गकलुषितहृदयेन, सुचिरममात्यगुणं प्रशस्य, प्रभ्रंशितोऽधिकारात् चाणक्यहतकः ।

---

(१०) सद्य इति । प्राकृतः क्षुद्रोऽपि जनः सद्यः विना कारणं क्रीड़ारसच्छेदं क्रीड़ायां यो रसः रागः तस्य छेदः भङ्गः तं न मर्षयेत् सहेत, लोकाधिकम् अलौकिकं धाम तेजः बिभ्राणः धारयन् पृथिवीभुजः, राजा किमु नैव मर्षयेदित्यर्थः । अनुष्टुप् वृत्तम् ।

मल। सखे! भागुरायण! गुणप्रशंसया दर्शितश्चन्द्रगुप्तेन राक्षसे भक्तिपक्षपातः।

भागु। कुमार! न तथा गुणप्रशंसया, यथा चाणक्यबटोर्निराकरणेन।

राक्ष। भद्र! किमयमेवैकः कौमुदीमहोत्सवप्रतिषेधश्चन्द्रगुप्तस्य चाणक्यं प्रति कोपकारणमुतान्यदप्यस्ति।

मल। सखे! भागुरायण! चन्द्रगुप्तस्य अपरकोपकारणान्वेषणे किं फलमेष पश्यति?

भागु। कुमार! एतत् फलं पश्यति, अतिमतिमांश्चाणक्यः, निष्प्रयोजनमेव किमिति चन्द्रगुप्तं कोपयिष्यति। न च कृतवेदी चन्द्रगुप्त एतावता गौरवमुल्लङ्घयिष्यति। सर्वथा चाणक्यचन्द्रगुप्तयोः पुष्कलात् कारणाद् यो विश्लेष उत्पद्यते (ट) स आत्यन्तिको भविष्यतीति।

कर। अमच्च! अत्थि अस्सइंपि चन्दउत्तस्स कोवकारणाइं चाणक्के (२०)।

राक्ष। किं किम्?

कर। जधा, पढ़मं दाव उवेक्खिदो अणेण अवक्कमन्तो कुमारो मलयकेदु अमच्चरक्खसो अ (२१)।

(२०) अमात्य! अस्ति अन्यदपि कोपकारणं चाणक्ये।

(२१) यथा प्रथमं तावदुपेक्षितः अनेनापक्रामन् कुमारो मलयकेतुः अमात्यराक्षसश्च।

(ट) कृतवेदी कृतज्ञः। पुष्कलात् महतः। विश्लेषः भेदः।

राच। सहर्षम्। सखे! शकटदास! हन्त हस्ततलगतः सम्प्रति चन्द्रगुप्तो भविष्यति।

शक। इदानीं चन्दनदासस्य बन्धनान्मोक्षः, भवतां च पुत्रदारैः सह समागमः, जीवसिद्धिप्रभृतीनां क्लेशच्छेदः।

भागु। स्वात्मगतम्। जातः सत्यं जीवसिद्धेः क्लेशच्छेदः।

मल। सखे! भागुरायण! हस्ततलगतो मे सम्प्रति चन्द्रगुप्तो भविष्यतीति व्याहरतः, (ठ) कोऽयमस्याभिप्रायः?

भागु। किमन्यत्, चाणक्यादपकृष्टस्य चन्द्रगुप्तस्योद्धरणे सौकार्य्यमवश्यमवगच्छति (ड)।

राच। भद्र! कृताधिकारः साम्प्रतं क्वासौ वटः?

कर। तहिं ज्जेव पाडलिपुत्ते पडिवसदि (२२)।

राच। सावेगम्। भद्र! तत्रैव प्रतिवसति, न तपोवनं गतः, प्रतिज्ञां वा न पुनः समारूढवान्?

कर। अमच्च! तपोवणं गमिस्सदि त्ति सुणीअदि (२३)।

राच। सावेगम्। शकटदास! नेदमुपपद्यते। पश्य,

देवस्य येन पृथिवीतलवासवस्य,
साग्रासनापनयजा निकृतिर्न सोढ़ा।

---

(२२) तस्मिन्नेव पाटलिपुत्रे प्रतिवसति।
(२३) अमात्य! तपोवनं गमिष्यतीति श्रूयते।

---

(ठ) व्याहरतः कथयतः।
(ड) सौकार्य्यं सुसाध्यताम्।

सोऽयं स्वयंकृतनराधिपतेर्मनस्वी,
मौर्यात् कथं नु परिभूतिमिमां सहेत ? ॥११॥

मल। सखे ! भागुरायण ! चाणक्यस्य तपोवनगमने पुनः प्रतिज्ञारोहणे वा कास्य स्वार्थसिद्धिः ।

भागु। कुमार ! नायमत्यन्तदुर्बोधोऽर्थः, यावद्यावन्निरपेक्षश्चाणक्यहतकश्चन्द्रगुप्ताद् (ढ) दूरीभवति तावत् तावदस्य स्वार्थसिद्धिः ?

शक। अमात्य ! अलमत्यन्तविकल्पितेन (ण)। एतदुपपद्यत एव। कुतः, पश्यत्वमात्यः।

राज्ञां चूडामणीन्दुद्युतिखचितशिखे मूर्ध्नि विन्यस्तपादः
स्वैरेवोत्पाद्यमानं किमिति विषहते मौर्य्य आज्ञाविघातम् ।
कौटिल्यः कोपनोऽपि स्वयमतिचरणे ज्ञातदुःखः प्रतिज्ञां,
दैवात् पूर्णप्रतिज्ञः पुनरपि न करोत्यायतिज्यानिभीतः ॥१२॥

---

(११) देवस्येति। येन चाणक्येन पृथिवीतलवासवस्य भूलोकेन्द्रस्य देवस्य नन्दस्य, कर्त्तरि षष्ठी, अग्रासनापनयजा अग्रात् श्रेष्ठात् आसनात् श्राद्धभोक्तृासनात् य अपनयः निष्काशनं तस्मात् जाता या निकृतिः अवमानना न सोढ़ा, मनस्वी प्रशस्तमतिः सः अयं चाणक्यः स्वयंकृतनराधिपतेः स्वयंदत्तराज्यात् मौर्य्यात् इमां परिभूतिं कथं नु सहेत न कथमपीत्यर्थः। वसन्ततिलकं वृत्तम् ।

(ढ) निरपेक्षः अपेक्षाशून्यः उदासीन इत्यर्थः ।

(ण) अत्यन्तविकल्पितेन अतिसन्देहेन ।

(१२) राज्ञामिति। मौर्य्यः चन्द्रगुप्तः राज्ञाम् अधीनन्दपाणां चूडामणीन्दुद्युतिखचितशिखे चूडायां निषक्ता ये मणयः ते इन्दव इव

राक्ष । सखे ! शकटदास ! एवमेतत्, तद् गच्छ, विश्रामय करभकम् ।

शक । यदाज्ञापयत्यमात्य इति । करभकेण सह निष्क्रान्तः ।

राक्ष । अहमपि कुमारं द्रष्टुमिच्छामि ।

मल । अहमेवार्य्यं द्रष्टुमागतः ।

राक्ष । नाट्येनावलोक्य । अये ! कुमार एवागतः । आसनादुत्थाय । इदमासनमुपवेष्टुमर्हति कुमारः ।

मल । अहमुपविशामि । उपविशत्वार्य्यः । इति उभौ यथासनमुपविष्टौ ।

मल । आर्य्य ! अपि सह्या शिरोवेदना ?

राक्ष । कुमारस्याधिराजशब्देनातिरस्कृते कुमारशब्दे, कुतः शिरोवेदनायाः सह्यता ?

मल । स्वयमुरीकृतमेतदार्य्येण, न दुष्प्रापं भविष्यति ।

---

उज्ज्वलत्वादिति भावः तेषां द्युतिभिः दीप्तिभिः खचिता शिखा यस्य तादृशे मूर्ध्नि शिरसि न्यस्तपादः अर्पितचरणः तेषां शासिता इत्यर्थः अतः स्वैरेव जनैः उत्पाद्यमानं क्रियमाणम् आज्ञाविघातं किमिति कथं विषहते न कथमपीत्यर्थः । कौटिल्यः चाणक्यः कोपनोऽपि अतिचरणे अभिचारक्रियानुष्ठाने स्वयं ज्ञातदुःखः विदितकष्टः अभिचारस्य अतीव कष्टसाध्यत्वादिति भावः । दैवात् पूर्णप्रतिज्ञः सुतराम् आयतिज्यानिभीतः आयतेः उत्तरकालिकफलस्य ज्यानेः हानेः भीतः यदि न फलिष्यतीति जातशङ्कः सन् पुनरपि प्रतिज्ञां न करोति । स्रग्धरावृत्तम् ।

तत् कियन्तं कालमस्माभिरेवं संभृतबलैरपि शत्रुव्यसन-मवेक्षमाणैरुदासितव्यम् (त)।

राक्ष। कुमार! कुतोऽद्यापि कालहरणस्यावकाशः? प्रतिष्ठस्व रिपुजयाय।

मल। अमात्य! अपि किञ्चित् शत्रोर्व्यसनमुपलब्धम्?

राक्ष। गाढ़मुपलब्धम्।

मल। कीदृशम्?

राक्ष। सचिवव्यसनं, किमन्यत् व्यसनम्। अपकृष्टश्चाण-क्याच्चन्द्रगुप्तः।

मल। अमात्य! सचिवव्यसनमव्यसनमेव।

राक्ष। कुमार! अन्येषां भूपतीनां कदाचिदमात्य-व्यसनमव्यसनमपि स्यात्, न पुनश्चन्द्रगुप्तस्य।

मल। आर्य! ननु विशेषतश्चन्द्रगुप्तस्येति।

राक्ष। किं कारणं यदस्यामात्यव्यसनमव्यसनम्।

मल। चन्द्रगुप्तप्रकृतीनां हि चाणक्यदोषा एवापराग-हेतवः। तस्मिन् निराकृते प्रथममपि चन्द्रगुप्तानुरक्ताः प्रकृ-तयः। इदानीं पुनः सुतरामेव तत्रानुरागं दर्शयिष्यन्ति।

राक्ष। कुमार! नैतदेवं [नैवेदं]। इह द्विप्रकाराः प्रकृतयः, चन्द्रगुप्तसहोत्थायिन्यो नन्दकुलानुरक्ताश्च। तत्र चन्द्रगुप्तसहोत्थायिनीनां प्रकृतीनां चाणक्यदोषा एव विरा-

---

(त) उरीकृतम् अङ्गीकृतम्। शत्रुव्यसनं शत्रोः व्यसनं विपत्-समयम् अवेक्षमाणैः प्रतीक्षमाणैः उदासितव्यं तूष्णीं स्थातव्यम्।

गहेतवो, न नन्दकुलानुरक्तानाम्। तास्तु खलु नन्दकुलमनेन पितृकुलभूतं कृतघ्नेन घातितमित्यपरागामर्षाभ्यां विप्रकृताः (थ) सत्यः स्वाश्रयमलभमानाश्चन्द्रगुप्तमेवानुवर्त्तन्ते। त्वादृशं पुनः प्रतिपक्षोद्धरणे सम्भावितशक्तिमभियोक्तारमासाद्य, क्षिप्रमेनं परित्यज्य, त्वामेवाश्रयन्ते इति। अत्र कुमारस्य वयमेव निदर्शनम्।

मल। अमात्य! किमेतदेवैकं सचिवव्यसनमभियोगकारणं चन्द्रगुप्तस्य? आहोस्विदन्यदप्यस्ति।

राक्ष। कुमार! किमन्यैर्बहुभिरपि? एतद्धि तत्र प्रधानतमम्।

मल। अमात्य! कथं प्रधानतमं नाम? किमिदानीं चन्द्रगुप्तः स्वराज्यकार्यधुरामन्यत्र मन्त्रिण्यात्मनि वा समासज्य, स्वयं प्रतिविधातुमसमर्थः स्यात्?

राक्ष। वाढमसमर्थ एव।

मल। किङ्कारणम्?

राक्ष। स्वायत्तसिद्धिषु, उभयायत्तसिद्धिषु (द) वा भूमिपालेषु कदाचिदेतत् सम्भवति, न तु चन्द्रगुप्ते; चन्द्रगुप्तस्तु दुरात्मा, नित्यं सचिवायत्तसिद्धावेवावस्थितश्चक्षुर्विकल

---

(थ) विप्रकृताः विरक्तीकृताः।

(द) स्वायत्तसिद्धिषु स्वेषु नतु मन्त्रिषु आयत्ता स्थिता सिद्धिः येषां ते तथोक्तेषु। उभयायत्तसिद्धिषु उभयोः आत्ममन्त्रिणोः आयत्ता सिद्धिः येषां तादृशेषु।

इवाप्रत्यक्षसर्वलोकव्यवहारः कथमिव स्वयं प्रतिविधातुं समर्थः स्यात् ? कुतः ?

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति ॥१३॥

अपि च,

नृपोऽपकृष्टः सचिवात् तदर्पणस्तनन्धयोऽत्यन्तशिशुः स्तनादिव ।
अदृष्टलोकव्यवहारमूढधीर्मुहूर्त्तमप्युत्सहते न वर्त्तितुम् ॥१४॥

मल । आत्मगतम् । दिष्ट्या नं सचिवायत्ततन्त्रोऽस्मि । प्रकाशम् । अमात्य ! यद्यप्येवं तथापि खलु बहुष्वभियोगकारणेषु सत्सु सचिवव्यसनमभियुञ्जानस्य प्रतुमभियोक्तुं नैकान्तिकी सिद्धिर्भवति ।

---

(१३) अत्युच्छ्रिते इति । श्रीः राजलक्ष्मीः अत्युच्छ्रिते अत्युन्नते कार्यक्षमे मन्त्रिणि पार्थिवे च सति पादौ अवष्टभ्य एकैकस्मिन् एकैकं पादं स्थापयित्वा उपतिष्ठते दण्डवत् तिष्ठति, किन्तु सा स्त्रीस्वभावात् अक्षमत्वादित्यर्थः भरस्य उभयत्र स्थितिरूपस्य क्लेशस्य असहा अक्षमा सती तयोर्द्वयोः राजमन्त्रिणोरेकतरं जहाति त्यजति । इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनात् उपजातिः ।

(१४) नृप इति । स्तनन्धयः स्तनपायी अत्यन्तशिशुः स्तनादिव सचिवात् अपकृष्टः, तदर्पणः तस्मिन्नेव सचिवे अर्पणं राज्यभारस्येति भावः यस्य तादृशः तथा न दृष्टः लोकव्यवहारः तेन मूढा धीर्यस्य तथोक्तः नृपः मुहूर्तमपि अल्पक्षणमपि वर्त्तितुं स्थातुं व्यवहर्तुं वा न उत्सहते न समर्थो भवति । वंशस्थविलं वृत्तम् ।

राक्ष। ऐकान्तिकीमेव सिद्धिमवगन्तुमर्हति कुमारः। कुतः?

त्वय्युत्कृष्टबले, ऽभियोक्तरि नृपे, नन्दानुरक्ते पुरे,
चाणक्ये चलिताधिकारविमुखे, मौर्ये नवे राजनि।
स्वाधीने मयि—। इत्यर्धोक्ते लज्जां नाटयन्।
—मार्गमात्रकथनव्यापारयोगोद्यमे,
त्वद्वाञ्छान्तरितानि सम्प्रति विभो! तिष्ठन्ति साध्यानि नः॥१५

मल। अमात्य! यद्येवमभियोगकालममात्यः पश्यति, तत् किमास्यते? पश्य,

उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलं
श्यामाः श्यामोपकण्ठद्रुममलिमुखराः कल्लोलमुखरम्।
स्रोतःखातावसीदत्तटमुरुदशनैरुत्सादिततटाः
शोणं सिन्दूरशोणा मम गजपतयः पास्यन्ति शतशः॥ १६॥

---

(१५) त्वयीति। हे विभो! उत्कृष्टबले उत्तमसामर्थ्ये समर्थसैन्ये च त्वयि, नृपे त्वयि अभियोक्तरि योद्धुमुद्यते, तथा पुरे नगरे नन्दानुरक्ते, तथा चाणक्ये चलिताधिकारविमुखे अधिकारच्युते अत एव विमुखे राज्यचिन्तापराङ्मुखे, तथा मौर्ये चन्द्रगुप्ते नवे अनभिज्ञे इत्यर्थः राजनि, तथा मार्गमात्रकथनव्यापारयोगोद्यमे मार्गस्य युद्धपथस्य कथनरूपव्यापारस्य योगः कौशलं तस्मिन् उद्यमो यस्य तादृशे स्वाधीने त्वन्मात्राधीने इत्यर्थः मयि सति सम्प्रति नः अस्माकं साध्यानि कार्याणि अभीष्टानीति शेषः त्वद्वाञ्छान्तरितानि तव वाञ्छा एव अन्तरिता व्यवधानकारिणी येषां तादृशानि त्वद्वाञ्छामात्रापेक्षाणीत्यर्थः तिष्ठन्ति। शार्दूलविक्रीडितं वृत्तम्।

(१६) उत्तुङ्गा इति। उत्तुङ्गाः अत्युन्नताः स्रुतमदसलिलाः मदजलस्राविणः श्यामाः अलिमुखराः अलिभिर्भ्रमरैः मदगन्ध-

अपिच,

गम्भीरगर्जितरवाः स्वमदाम्बुमिश्र-
मासारवर्षमिव सीकरमुद्गिरन्त्यः ।
विन्ध्यं विकीर्णसलिला इव मेघमाला
रोत्स्यन्ति वारणघटा नगरं मदीयाः ॥ १७ ॥

इति भागुरायणेन सह निष्क्रान्तो मलयकेतुः ।

राक्ष । कः कोऽत्र भोः ?

प्रविश्य पुरुषः । आणवेदु अमच्चो (२४) ।

---

(२४) आज्ञापयतु अमात्यः ।

---

क्षुब्धैरिति भावः क्षुरा: भङ्गारमन्तः उद्दशनैः उत्पादितं विध्वंसितं तटं यैः तादृशाः सिन्दूरशोणाः सिन्दूरेण शोणाः तव शतशः गजपतयः तद्कूलम् उच्चततटं प्रस्यन्दिसलिलं प्रवहमाणजलं श्यामा उपकण्ठवर्त्तिनो द्रुमाः यस्या यस्य तादृशं कल्लोलमुखरं कल्लोलैः तरङ्गैः मुखरं महाशब्दयुतं स्रोतःखातावसीदत्तटं स्रोतसा प्रवाहेण खातं अत एव अवसीदत् पतत् तटं यस्य तथाभूतं शोणं पाटलिपुत्रवर्त्तिनदविशेषं पास्यन्ति पानेन शोषयिष्यन्तीत्यर्थः । सुवदनावृत्तं "ज्ञेया सप्ताश्वभिर्मरभनययुता भ्लौ गः सुवदना" इति तल्लक्षणात् ।

(१७) गम्भीरेति । गम्भीरगर्जितरवाः धीरध्वनयः स्वमदाम्बुमिश्रं निजदानवारियुक्तम् आसारवर्षं धारासम्पातमिव सीकरम् अम्बुकणान् उद्गिरन्त्यः उद्वमन्त्यः विकीर्णसलिलाः दृष्टजला मेघमालाः जलदपङ्क्तय इव मदीया वारणघटाः गजसङ्घाः विन्ध्यमिव नगरं मत्पुरं रोत्स्यन्ति । वसन्ततिलकं वृत्तम् ।

राक्ष । प्रियंवदक ! ज्ञायतां सांवत्सरिकाणां (ध) द्वारि कस्तिष्ठति ।

प्रियं । जं अमच्चो आणवेदि त्ति । निष्क्रम्य क्षपणकं दृष्ट्वा पुनः प्रविश्य च । अमच्च ! एसो क्खु संवत्सरिओ खवणओ (२५) ।

राक्ष । स्वगतम् अनिमित्तं सूचयित्वा । कथं प्रथममेव क्षपणकदर्शनम् ?

प्रियं । जीवसिद्धी (२६) ।

राक्ष । प्रकाशम् । अबीभत्सदर्शनं (न) कारयित्वा, प्रवेशय ।

प्रियं । जं अमच्चो आणवेदि (२७) । इति निष्क्रान्तः ।

ततः प्रविशति क्षपणकः ।

क्षप ।

सासणमलिहन्ताणं पडिवज्जह, मोहवाहिवेज्जाणं ।
जे पढमसेत्तकडुअं, पच्छा पत्थं उवदिसन्ति (२८) ॥ १८ ॥

(२५) यद् अमात्यः आज्ञापयतीति । अमात्य ! एष खलु सांवत्सरिकः क्षपणकः ।

(२६) जीवसिद्धिः ।

(२७) यद् अमात्य आज्ञापयति ।

(२८) शासनमर्हतां प्रतिपद्यध्वं मोहव्याधिवैद्यानाम् ।
ये प्रथममात्रकटुकं पश्चात् पथ्यमुपदिशन्ति ॥

(ध) सांवत्सरिकाणां ज्योतिषिकाणाम् ।

(न) अबीभत्सदर्शनम् अकुत्सितदर्शनं, तस्य नग्नत्वात् कन्थाकौपीनादिधारित्वाद् वा इति भावः ।

(१८) शासनमिति । मोहव्याधिवैद्यानां मोहः अज्ञानं स एव

क्षपणकः। धम्मलाहो सावका ! भोदु।

राक्ष। भदन्त ! (प) निरूप्यतां, तावदस्माकं प्रस्थान-योग्यदिवसः।

क्षप। नाट्येन चिन्तयित्वा। (२९) सावका ! णिरूविदे मुहुत्ते। आमज्झह्णादो णिव्वुत्तसत्तसकला सोहणा तिही, संपुण्ण-चन्दा पुण्णमासी, तुह्माणं उत्तलाए दिसाए दक्खिणं दिसं पत्थिदाणं, दक्खिणदुवालिओ णक्खत्तओ (फ)। अविअ,

---

धर्मलाभः उपासक ! भवतु।

(२९) उपासक ! निरूपितो मुहूर्त्तः। आ मध्याह्नात् निवृत्तसप्तसकला शोभना तिथिः सम्पूर्णचन्द्रा पौर्णमासी, युष्माकमुत्तरस्या दिशो दक्षिणां दिशं प्रस्थितानां, दक्षिणद्वारिकं नक्षत्रम्। अपिच,

---

व्याधिः तस्य वैद्याः चिकित्सकाः ज्ञानदानेन निरासकाः तेषाम् अर्हतां मान्यानां बौद्धविशेषाणाञ्च शासनम् आदेशं प्रतिपद्यध्वं प्रतिपालयत इत्यर्थः। ये अर्हन्तः प्रथममात्रकटुकं प्रथममेव कटुकम् अप्रीतिकरत्वादिति भावः पश्चात् पथ्यं परिणामहितम् उपदिशन्ति शिक्षयन्ति।

(प) भदन्त इति बौद्धसन्यासिनः सम्बुद्धिः, मान्य इत्यर्थः।

(फ) आ मध्याह्नात् मध्याह्नकालमारभ्य निवृत्तं सप्तकलं यस्याः सा सम्पूर्णचन्द्रा पौर्णमासी शोभना तिथिः उत्तरस्या दिशः दक्षिणां दिशं प्रस्थितानां युष्माकं दक्षिणद्वारिकं दक्षिणदिग्वर्त्ति नक्षत्रं मघादिनक्षत्रसप्तकम्। प्रकृते पौर्णमास्यास्तिथेर्मघादिनक्षत्राणाञ्च अयात्रिकत्वात् तत्र गमने अमङ्गलं पाटलिपुत्रस्य ततृस्थानतः दक्षिणदिक्-स्थितत्वात् यमभवनं गन्तव्यमिति च ध्वन्यते।

अत्थाहिमुहे सूले, उदिदे संपुण्णमण्डले चन्दे ।
गमणं (अस्से) बुहस्स लग्गे, उदिदत्थमिदे अ केदुम्मि (२९)॥१९

राच । भदन्त ! तिथिरेव तावत् न शुध्यति ।

क्षप । सावका !

एक्कगुणा होइ तिथी, चउग्गुणी होइ णक्खत्ते ।
चउसट्ठिगुणे लग्गे, एसे दीसदि जोइससिद्धंते ॥ २० ॥
लग्गे होइ सुलग्गे, कूलग्गहं पलिहलिज्जासु ।
पाविहिं दीहं लाहं चन्दस्स बलेण गच्छन्ते (३०) ॥२१॥

---

(२९) अस्ताभिमुखे सूरे, उदिते सम्पूर्णमण्डले चन्द्रे ।
गमनं (अस्मिन्) बुधस्य लग्ने, उदितास्तमिते च केतौ ॥

(३०) उपासक !
एकगुणा भवति तिथिश्चतुर्गुणं भवति नक्षत्रम् ।
चतुःषष्टिगुणं लग्नम्, एतत् दृश्यते ज्योतिषसिद्धान्ते ॥

---

(१९) अपिच, सूरे सूर्ये अस्ताभिमुखे अस्ताचलगमनोन्मुखे प्रकृते सूरे सूर्यतुल्ये राक्षसे इति ध्वनिः, सम्पूर्णमण्डले चन्द्रे उदिते प्रकृते चन्द्रगुप्ते इति ध्वनिः, बुधस्य लग्ने बुधस्य ग्रहविशेषस्य लग्ने उदये प्रकृते बुधस्य चाणक्यस्य इति ध्वनिः, उदितास्तमिते उदित्वा अस्तमिते अस्तं गते केतौ ग्रहविशेषे प्रकृते मलयकेतौ इति ध्वनिः, गमनं यात्रा भवेदिति शेषः ।

(२०) एकगुणेति । तिथिः एकगुणा भवति शुभाशुभयोरस्या अल्पशक्तित्वात्, नक्षत्रं चतुर्गुणं भवति तिथ्यपेक्षया अस्य चतुर्गुणफलदायकत्वात्, लग्नं चतुःषष्टिगुणं तिथ्यपेक्षया अस्य तद्गुणफलप्रदत्वात् । ज्योतिषसिद्धान्ते एतत् दृश्यते ।

राक्ष। भदन्त! अपरैः सांवत्सरिकैः सार्द्धं संवाद्यताम् (ब)।

क्षप। संवादेदु सावके। अहं णिअं गेहं गमिस्सं (२१)।

राक्ष। न खलु कुपितो भदन्तः।

क्षप। ण कुविदे तुह्माणं भदन्ते (२२)।

राक्ष। कस्तर्हि?

क्षप। स्वगतम्। भअवं कदन्ते। जेण अत्तणो पक्खं उज्झिअ परपक्खं (भ) पमाणीकलेसि (२३)।

इति निष्क्रान्तः क्षपणकः।

राक्ष। प्रियंवदक! ज्ञायतां का वेला वर्त्तत इति।

---

लग्नं भवति सुलग्नं, क्रूरग्रहं परिहर आशु।
प्राप्नुहि दीर्घं लाभं चन्द्रस्य बलेन गच्छन्॥

(२१) संवादयतूपासकः। अहं निजं गेहं गमिष्यामि।

(२२) न कुपितो युष्माकं भदन्तः।

(२३) भगवान् कृतान्तः। येनात्मनः पक्षमुज्झित्वा परपक्षं प्रमाणीकरोषि।

---

(२१) किञ्च, लग्नं सुलग्नं भवति, आशु शीघ्रं क्रूरग्रहं सन्ध्याग्रहयोगं परिहर परित्यज, पक्षते हे क्रूर राक्षस! परम् आग्रहं चाणक्यपराजये यत्नं परिहर। चन्द्रस्य बलेन गच्छन् दीर्घं महान्तं लाभं प्राप्नुहि "चन्द्रो लग्नगुणाधिकः" इति वचनेन चन्द्रबलस्यैव प्राबल्यात् पक्षते चन्द्रस्य चन्द्रगुप्तस्य बलेन इति ध्वनिः।

(ब) संवाद्यतां सम्मेलनं क्रियताम्।

(भ) परपक्षं परस्य शत्रोः पक्षं मामित्यर्थः।

प्रियं । जं अमच्चो आणवेदि त्ति। निष्क्रम्य पुनः प्रविश्य च।
अत्थाहिलासी भअवं सूले (३४)।

राजा । आसनादुत्थाय विलोक्य च। अये अस्ताभिलाषी भगवान् सहस्रदीधितिः । तथाहि,

आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः
पत्रच्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा ।
एते तस्मिन् निवृत्ताः पुनरितरककुप्प्रान्तपर्य्यस्तबिम्बे
प्रायोभृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः ॥२२॥

इति निष्क्रान्ताः सर्वे ।

चतुर्थोऽङ्कः ।

---

(३४) यत् अमात्य आज्ञापयतीति। अस्ताभिलाषी भगवान् सूर्य्यः ।

---

(२२) आविर्भूतानुराग इति । उदयगिरेः उदयाचलात् उज्जिहानस्य उद्गच्छतः भानोः सूर्य्यस्य सम्बन्धविवक्षया षष्ठी, क्षणं व्याप्य आविर्भूतः अनुरागः येषां ते उपवनतरवः पत्रच्छायैः उपलक्षिताः सन्तः पुरस्तात् दूरं गत्वा तस्मिन् सूर्य्ये पुनः इतरककुप्प्रान्तपर्य्यस्तबिम्बे पश्चिमदिक्प्रान्तवर्त्तिमण्डले सति, आशु शीघ्रमेव नतु कालप्रतीक्षणं कृत्वेत्यर्थः निवृत्ताः। तथाहि, सेवमाना भृत्याः प्रचलितविभवं सम्पद्विहीनं स्वामिनं प्रायः बाहुल्येन त्यजन्ति । सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः । स्रग्धरावृत्तम् ।

---

# पञ्चमोऽङ्कः ।

ततः प्रविशति लेखमलङ्करणस्थलिकाञ्च सत्त्रामादाय सिद्धार्थकः ।

सिद्धा । ह्रीमाणहे ह्रीमाणहे ।

बुद्धिजलणिज्झरेहिं सिच्चन्ती देसकालकलसेहिं ।
दंसइस्सदि अज्ज फलं गरुअं चाणक्कणीदिलदा ॥ १ ॥

गहीदो मए अज्ज चाणक्केण पढमलेहिदो लेहो, अमच्चरक्खसस्स मुद्दालंच्छिदो। तस्स ज्जेव्व मुद्दालंच्छिदा इअं आहरणपेडिआ। चलिदोह्मि पाडलिउत्तं, ता जाव गच्छह्मि । परिक्रम्यावलोक्य च। कहं क्खवणओ आअच्छदि ? ता जाव

---

(१) आश्चर्य्यम् आश्चर्य्यम् ।
बुद्धिजलनिर्झरैः सिच्यमाना देशकालकलसैः ।
दर्शयिष्यति अद्य फलं गुरुकं चाणक्यनीतिलता ॥

गृहीतो मयार्य्यचाणक्येन प्रथमलेखितो लेखः, अमात्यराक्षसस्य मुद्रालाञ्छितः। तस्यैव मुद्रालाञ्छिता इयम् आभरणपेटिका। चलितो-

---

(१) देशाः कालाश्च कलसाः कुम्भा इव येषां तादृशैः बुद्धिजलनिर्झरैः बुद्धयः जलानीव तेषां निर्झरैः निषेकैः सिच्यमाना आर्द्रीक्रियमाणा चाणक्यनीतिलता चाणक्यस्य नीतिः लता इव अद्य गुरुकं महत् फलं दर्शयिष्यति, उपयुक्ते देशे काले च बुद्धिपूर्वककार्य्यकरणे अवश्यमेव फलोत्पत्तिरिति भावः ।

मे असउणभूदं (क) इमस्स दंसणं, ता आदित्तदंसणेण पडिहणामि (१)।

ततः प्रविशति क्षपणकः ।

अलिहन्ताणं पणमामो, जे दे गंभीलदाए बुद्धीए ।
लोउत्तलेहिं लोए सिद्धिं मग्गेहिं मग्गन्ति (२) ॥ २॥

सिद्धा । भदन्त ! पणमामि (३) ।

क्षप । सावका ! धम्मलाहो दे होदु । सिद्धार्थकं निर्वर्ण्य । सावका ! समुद्दसन्तलणकिदव्ववसाअं (ख) विअ दे हिअअं पेक्खामि (४) ।

---

ऽस्मि पाटलिपुत्रं, तद् यावन् गच्छामि । कथं क्षपणकः आगच्छति ? तद् यावन्मे ऽशकुनभूतमिमस्य दर्शनं, तस्मादादित्यदर्शनेन प्रतिहन्मि ।

(२) अर्हतां प्रणमामो ये ते गम्भीरतया बुद्धेः ।
लोकोत्तरैर्लोके सिद्धिं मार्गैर्मार्गयन्ति ॥

(३) भदन्त ! प्रणमामि ।

(४) उपासक ! धर्मलाभस्ते भवतु । उपासक ! समुद्रसन्तरणकृत-व्यवसायमिव ते हृदयं पश्यामि ।

---

(क) अशकुनभूतम् अमङ्गलभूतम् ।

(२) अर्हतामिति । अर्हतां मान्यानां गुरुजनानामित्यर्थः बौद्ध-भेदानाञ्च, कर्मणि षष्ठी, प्रणमामः ये ते अर्हन्तः बुद्धेः गम्भीरतया धीरतया सुधीरया बुद्ध्या इत्यर्थः लोके जगति लोकोत्तरैः अलौकिकैः मार्गैः उपायैः सिद्धिं कार्य्यस्येति शेषः मार्गयन्ति अन्विच्छन्ति ।

(ख) समुद्रसन्तरणकृतव्यवसायं समुद्रपारगमने कृतोद्योगं दुष्कर-कार्य्योद्यतमित्यर्थः ।

सिद्धा । कहं भदन्तो जाणादि (५) ?

क्षप । सावका ! किं एत्थ जाणिदव्वं । णं एसो ज्जेव दे मग्गणाओकण्णधारे (ग) लेहे सूचेदि (६) ।

सिद्धा । जाणिदं भदन्तेण देसन्तलं चलिदोह्मि । ता कधेदु भदन्तो कीदिसो अज्ज दिअसो (७) ।

क्षप । विहस्य । सावका ! मुण्डं मुण्डिअ तुमं णक्खत्ताणि पुच्छसि (८) ?

सिद्धा । भदन्त ! सम्पदं पि किं जादं ता कधेहि । जदि अत्तणो अणुउलं भविस्सदि ता गमिस्सं, अण्णधा णिवत्तिस्सं (९) ।

क्षप । सावकाणं सम्पदं एदस्सिं मलअकेदुकडए (घ)

---

(५) कथं भदन्तो जानाति ?

(६) उपासक ! किमत्र ज्ञातव्यम् । ननु एष एव ते मार्गनौकर्णधारो लेखः सूचयति ।

(७) ज्ञातं भदन्तेन देशान्तरं चलितोऽस्मि । तद् कथयतु भदन्तः कीदृशोऽद्य दिवसः ।

(८) उपासक ! मुण्डं मुण्डयित्वा त्वं नक्षत्राणि पृच्छसि ?

(९) भदन्त ! साम्प्रतमपि किं जातं तद् कथय । यदि आत्मनः अनुकूलं भवेत् तदा गमिष्यामि, अन्यथा निवर्त्तिष्ये ।

---

(ग) मार्गनौकर्णधारः मार्गः पन्थाः स एव नौः तत्र कर्णधारः नाविक इव, अस्य लेखस्य पारकरणसामर्थ्यमस्तीति द्योत्यते ।

(घ) मलयकेतुकटके मलयकेतोः कटके शिविरे ।

अणुउलेण अणणुउलेण वा, अगहिदमुद्दो ण गच्छीअदि (१०)।

सिद्धा। भदन्त ! कहेहि कुदो क्खु अअं (११)।

चप। सावका ! णिसामेहि, पढमं दाव एत्थ मलअकेदुकडए लोअस्स अणिवालिअणिक्कमणप्पवेसो आसी। दाणीं इदो पच्चासण्णे कुसुमउरे, ण कोवि अमुद्दलंच्छिदो णिक्कमिदुं पविसिदुं वा अणुमोदीअदि। ता जदि भागुराअणस्स मुद्दालंच्छिदोसि, तदो गच्छ वीसत्थो, अण्णधा णिवत्तिअ णिहुअएठं चिट्ठ। मा तुमं गुम्मट्ठाणाधिवेहिं (ङ) संजमिदकलचलणो राअउलं प्पवेसीअसि (१२)।

सिद्धा। किं ण आणादि भदन्तो, जधा अमच्चरक्खसस्स

---

(१०) उपासकानां साम्प्रतमेतस्मिन् मलयकेतुकटके अनुकूलेन अननुकूलेन वा, अगृहीतमुद्रो न गच्छति।

(११) भदन्त ! कथय कुतः खलु अयम्।

(१२) उपासक ! निशामय, प्रथमं तावदत्र मलयकेतुकटके लोकस्यानिवारितनिष्क्रमणप्रवेश आसीत्। इदानीम् इतः प्रत्यासन्ने कुसुमपुरे, न कोऽपि अमुद्रालाञ्छितो निष्क्रमितुं प्रवेष्टुं वा अनुमोद्यते। तत् यदि भागुरायणस्य मुद्रालाञ्छितोऽसि, तदा गच्छ विश्वस्तः, अन्यथा निवृत्य निभृतकण्ठं तिष्ठ। मा त्वं गुल्मस्थानाधिपैः संयमितकरचरणो राजकुलं प्रवेक्ष्यसे।

---

(ङ) गुल्मस्थानाधिपैः गुल्मस्थानं रक्षास्थानविशेषः प्रहरिस्थानावास इत्यर्थः तदधिपैः तदध्यक्षैः।

केलिअरो अन्तिओ (च) [सण्णिहिदो] सिद्धत्थओ अहं त्ति । ता अमुद्दालंच्छिदं पि मं णिक्कमन्तं कस्स सत्ती णिवारेदुं (१३) ?

क्षप । सावका ! रक्खसस्स पिसाचस्स वा केलिअरो होहि । णत्थि उण दे अमुद्दालंच्छिदस्स णिक्कमणोवाओ (१४)

सिद्धा । भदन्त ! ण कुप्प,भण मे कज्जसिद्धी होदुत्ति (१५)

क्षप । सावका ! गच्छ होदु दे कज्जसिद्धी । अहं पि भागुराअणादो पाडलिउत्तं गन्तुं मुद्दं पडिच्छेमि(१६) । (छ)

इति उभौ निष्क्रान्तौ । प्रवेशकः (ज) ।

---

(१३) किं न जानाति भदन्तः, यथा अमात्यराक्षसस्य केलिकरः अन्तिकः (सन्निहितः) सिद्धार्थकोऽहमिति । तद् अमुद्रालाञ्छितमपि मां निष्क्रामन्तं कस्य शक्तिर्निवारयितुम् ?

(१४) उपासक ! राक्षसस्य पिशाचस्य वा केलिकरो भव । नास्ति पुनस्ते अमुद्रालाञ्छितस्य निष्क्रमणोपायः ।

(१५) भदन्त ! न कुप्य, भण मे कार्य्यसिद्धिर्भवतु इति ।

(१६) उपासक ! गच्छ, भवतु ते कार्य्यसिद्धिः । अहमपि भागुरायणात् पाटलिपुत्रं गन्तुं मुद्रां प्रतीच्छामि ।

---

(च) अन्तिकः सन्निधानवर्त्ती पार्श्वचर इत्यर्थः ।

(छ) प्रतीच्छामि गृह्णामि ।

(ज) प्रवेशक इति "वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः । प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ॥" इत्युक्तलक्षणः । अत्र वृत्तस्य प्रथमाङ्के चाणक्येन लेखितपत्रवृत्तान्तस्य तथा वर्त्तिष्यमाणस्य भागुरायणसकाशात् मुद्राग्रहणादिवृत्तान्तस्य च कथांशस्य सूचनात् तथात्वमिति बोध्यम् ।

ततः प्रविशति पुरुषेणानुगम्यमानो भागुरायणः ।

भागु । आत्मगतम् । अहो ! विचित्रता आर्य्यचाणक्यनीतेः । कुतः ?

मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना
मुहुः सम्पूर्णाङ्गी, मुहुरतिकृशा कार्य्यवशतः ।
मुहुर्भ्रश्यद्बीजा, मुहुरपि बहुप्रापितफले-
त्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ॥ २ ॥

प्रकाशम् । भद्र ! भासुरक ! न मां दूरीभवन्तमिच्छति कुमारः । अतोऽस्मिन्नेवास्थानमण्डपे विन्यस्यतामासनम् ।

पुरुषः । एदं आसणं, उपविसदु अज्जो (१७) ।

भागु । उपविश्य । भद्र ! भासुरक ! यः कश्चिन्मुद्रार्थी मां द्रष्टुमिच्छति, स त्वया प्रवेशयितव्यः ।

पुरु । जं अज्जो आणवेदि त्ति (१८) । निष्क्रान्तः ।

---

(१७) एतदासनम्, उपविशतु आर्य्यः ।

(१८) यत् आर्य्य आज्ञापयतीति ।

---

(२) मुहुरिति । नयविदः नीतिज्ञस्य नीतिः नियतिः दैवमिव चित्राकारा विचित्रस्वरूपा अहो इति आश्चर्य्ये । तथाहि, कार्य्यवशतः मुहुः कदाचिदित्यर्थः लक्ष्योद्भेदा लक्ष्यः अनुमेयः उद्भेदः प्रकाशो यस्याः सा, मुहुः अधिगमाभावेन गहना दुर्बोधा इत्यर्थः, मुहुः सम्पूर्णाङ्गी सम्पूर्णानि अङ्गानि अवयवा यस्याः तादृशी, मुहुः अतिकृशा अल्पमात्रबोधगम्या इत्यर्थः, मुहुः भ्रश्यद्बीजा भ्रश्यत् नश्यत् बीजं कारणं यस्याः तथाभूता, मुहुरपि बहुप्रापितफला बहु प्रचुरं यथा तथा प्रापितं फलं यस्याः तथोक्ता । शिखरिणीवृत्तम् ।

भागु । स्वगतम् । कष्टमेवमपि नामायमस्मासु स्नेहवान् कुमारो मलयकेतुरिति सन्धातव्यः (भ) इत्यहो दुष्करम् । अथवा,

कुले, लज्जायां च, स्वयशसि च, माने च, विमुखः,
शरीरं विक्रीय क्षणिकधनलाभाद्धनवति ।
तदाज्ञां कुर्वाणो हितमहितमित्येतदधुना
विचारातिक्रान्तः, किमिति परतन्त्रो विमृशति ॥ ४ ॥

ततः प्रविशति प्रतीहार्यनुगतो मलयकेतुः ।

मल । स्वगतम् । अहो ! राक्षसं प्रति मे विकल्पबाहुल्यादाकुला (ञ) बुद्धिर्न निश्चयमधिगच्छति । कुतः ?

भक्त्या नन्दकुलानुरागदृढ़या नन्दान्वयालम्बिना
किं चाणक्यनिराकृतेन कृतिना मौर्य्येण सन्धास्यते ।
स्थैर्य्यं भक्तिगुणस्य वा विगणयन् किं सत्यसन्धो भवेदित्यारूढ़कुलालचक्रमिव मे चेतश्चिरं भ्राम्यति ॥ ५ ॥

---

(भ) सन्धातव्यः प्रतारणीयः ।

(४) कुले इति । परतन्त्रः पराधीनो जनः कुले वंशे लज्जायां स्वयशसि माने च विमुखः सन् क्षणिकधनलाभात् क्षणिकधनप्रत्याशया धनवति धनस्वामिनि शरीरं विक्रीय तदाज्ञां कुर्वाणः प्रतिपालयन् सुतरां विचारातिक्रान्तः सदसद्विचारकरणे अप्राप्तावसरः अधुना एतत् हितम् एतत् अहितमिति युक्तायुक्तमित्यर्थः किमिति कथंचिद्विमृशति चिन्तयति । शिखरिणीवृत्तम् ।

(ञ) विकल्पबाहुल्यात् सन्देहप्राचुर्य्यात् ।

(५) भक्त्या इति । नन्दकुलानुरागदृढ़या नन्दकुले यः अनुरागः तेन दृढ़या प्रगाढ़या भक्त्या चाणक्यनिराकृतेन नन्दान्वयालम्बिना

प्रकाशम् । विजये ! क्व भागुरायणः ?

प्रतीहारी । कुमार ! एसो क्खु करआदो णिक्कमिदु-कामस्स मुद्दासम्पदानाधिआरे चिट्ठदि (१९) ।

मल । विजये ! मुहूर्त्तं निभृतपदसञ्चारो भव, यावदस्य पराङ्मुखस्यैव पाणिभ्यां नयने पिदधामि ।

प्रती । जं कुमारो आणवेदि (२०) ।

प्रविश्य भासुरकः । अज्ज ! एसो क्खु खवणओ मुद्दा-णिमित्तं अज्जं पेक्खिदुमिच्छदि (२१) ।

भागु । प्रवेशय ।

भासु । जं अज्जो आणवेदि त्ति (२२) । निष्क्रान्तः ।

प्रविश्य क्षपणकः । सावकाणं धम्मविड्ढी होदु (२३) ।

---

(१९) एष खलु कटकान्निष्क्रमितुकामानां मुद्रासम्प्रदानाधिकारे तिष्ठति ।

(२०) यत् कुमार आज्ञापयति ।

(२१) आर्य ! एष खलु क्षपणको मुद्रानिमित्तम् आर्यं प्रेक्षितु-मिच्छति ।

(२२) यत् आर्य्य आज्ञापयतीति ।

(२३) उपासकानां धर्मवृद्धिः भवतु ।

---

नन्दवंशीयेन कृतिना मौर्य्येण चन्द्रगुप्तेन सहेत्यर्थः किं सन्धास्यते संगंस्यते राक्षस इति शेषः, अथवा भक्तिगुणस्य मनेति शेषः स्थैर्य्यं दार्ढ्यं विगणयन् किं सत्यसन्धः सत्यप्रतिज्ञः भवेत् अहं मौर्य्यं जित्वा तुभ्यं सकलं मगधराज्यं दास्यामीति या प्रतिज्ञा कृता तां सफलये-दिति मे मनः आरूढकुलालचक्रं कुलालचक्रोपरिस्थितमिव चिरं भ्राम्यति । शार्दूलविक्रीडितं वृत्तम् ।

भागु । वाक्येनावलोक्य स्वगतम् । अये ! राक्षसस्य मित्रं, जीवसिद्धिः । प्रकाशम् । भदन्त ! न खलु (ट) राक्षसस्य प्रयोजनमेव किञ्चिदुद्दिश्य गम्यते ?

क्षप । कर्णौ पिधाय । सन्तं पावं, सन्तं पावं । सावका ! तहिं ज्जेव गमिस्सं, जहिं रक्खसस्स पिसाचस्स वा नामं पि ण सुणीअदि (२४) ।

भागु । भदन्त ! बलीयांस्ते सुहृदि प्रणयकोपः । तत् किमपराद्धं राक्षसेन भदन्तस्य ?

क्षप । सावका ! ण मम किं पि रक्खसेण अवलद्धं, सअं ज्जेव मन्दभाओ अत्तणो णं [कम्मसु लज्जामि] अवलज्झामि (२५) ।

भागु । भदन्त ! वर्द्धयसि मे कुतूहलम् ।

मल । स्वगतम् । मम च ।

भागु । श्रोतुमिच्छामि ।

मल । स्वगतम् । अहमपि ।

क्षप । सावका ! किं एदिणा [असुणिदव्वेण] सुणिदेण (२६) ।

---

(२४) शान्तं पापं, शान्तं पापम् । उपासक ! तत्रैव गमिष्यामि, यत्र राक्षसस्य पिशाचस्य वा नामापि न श्रूयते ।

(२५) उपासक ! न मे किमपि राक्षसेनापराद्धं, स्वयमेव मन्दभाग्य आत्मनो ननु अपराध्यामि पाठान्तरे आत्मनो ननु कर्मसु लज्जामि।

(२६) उपासक ! किमेतेन (अश्रोतव्येन) श्रुतेन ।

---

(ट) न खलु इति प्रश्नार्थमव्ययम् ।

भागु । भदन्त ! यदि रहस्यं, तदा तिष्ठतु ।

क्षप । सावका ! णहि रहस्सं (२७) ।

भागु । तर्हि कथ्यताम् ।

क्षप । सावका ! णत्थि एदं, तधावि ण कधइस्सं अदिणिसंसं (२८) ।

भागु । भदन्त ! अहमपि मुद्रां न दास्यामि ।

क्षप । स्वगतम् । युक्तमिदानीमर्थिने (ठ) कथयितुम् । प्रकाशम् । का गदी । एसे णिवेदेमि, सुणादु सावको । अत्थि दाव हगे अधस्सी पढमं पाडलिउत्ते निवसमाणो लक्खसस्स मित्तत्तणं उवगदे । तह्मिच्च अवसले लक्खसेण गूढं विसकस्सापओअं समुप्पादिअ, घादिदे देवे पव्वदीसले (२९) ।

मल । सत्रास्यमात्मगतम् । कथं, राक्षसेन घातितस्तातो न चाणक्येन ?

भागु । भदन्त ! ततस्ततः ?

क्षप । तदो हगे लक्खसस्स मित्तं कदुअ, चाणक्कहदएण सणिकालं णअरादो णिव्वासिदो । दाणीं पि लक्खसेण

(२७) उपासक ! नहि रहस्यम् ।

(२८) नास्तीदं, तथापि न कथयिष्यामि अतिनृशंसम् ।

(२९) का गतिः । एष निवेदयामि, शृणोतूपासकः । अस्ति तावत् अहमधन्यः प्रथमं पाटलिपुत्रे निवसन् राक्षसस्य मित्रत्वमुपगतः । तस्मिन्नेवावसरे राक्षसेन गूढविषकन्याप्रयोगमुत्पाद्य, घातितो देवः पर्वतेश्वरः ।

(ठ) अर्थिने प्रार्थयमानाय भागुरायणाय ।

अणेअअकज्जकुसलेण किंपि तादिसं आलम्बीअदि, जेण हगे जीअलोआदो णि[व्वा]क्कासिआमि (२०)।

भागु। भदन्त! प्रतिश्रुतराज्यार्द्ध[मयच्छता] सम्प्रदानमनिच्छता चाणक्यहतकेनेदमकार्य्यमनुष्ठितं, न राक्षसेनेति श्रुतमस्माभिः।

क्षप। कर्णौ पिधाय। सन्तं पावं। सावका! चाणक्को विसकणाए णामंपि ण जाणादि। तेण ज्जेव दुट्टबुद्धिणा लक्खसेण एसा अकज्जसिद्धी किदा (२१)।

भागु। भदन्त! कष्टमिदम्, इयं मुद्रा दीयते, एहि कुमारं संभावयाव।

मल। श्रुतं सखे! श्रवणविदारणं वचः

सुहृन्मुखाद्रिपुमधिकृत्य भाषितम्।
पितुर्वधव्यसनमिदं हि येन, मे
चिरादपि द्विगुणमिवाद्य वर्द्धते॥ ६॥

---

(२०) ततोऽहं राक्षसस्य मित्रं सत्वा, चाणक्यहतकेन सनिकारं नगरान्निर्वासितः। इदानीमपि राक्षसेन अनेकाकार्य्यकुशलेन किमपि तादृशमालभ्यते, येनाहं जीवलोकात् नि[र्वासे]क्काश्ये।

(२१) शान्तं पापम्। उपासक! चाणक्यो विषकन्यायाः नामापि न जानाति। तेनैव दुष्टबुद्धिना राक्षसेन एषा अकार्य्यसिद्धिः कृता।

---

(६) श्रुतमिति। हे सखे! रिपुं शत्रुमथतु राक्षसमधिकृत्य आश्रित्य भाषितं कथितं श्रवणविदारणम् अतिकठोरमित्यर्थः वचः वाक्यं सुहृन्मुखात् सुहृदः राक्षसस्यैव मित्रस्य क्षपणकस्य मुखात् श्रुतं

चाप। स्वगतम्। अये! श्रुतं मलयकेतुहतकेन, कृतार्थोऽस्मीति। निष्क्रान्तः।

मल। प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा। राक्षस! युक्तमिदम्?

मित्रं ममायमिति निर्वृतचित्तवृत्ति-
र्विस्रम्भतस्त्वयि निवेशितसर्वकार्य्यः।
तातं निपात्य, सह बन्धुजनाक्षितोयै-
रन्वर्थतोऽपि ननु राक्षस! राक्षसोऽसि॥ ७॥

भागु। स्वगतम्। रक्षणीया राक्षसस्य प्राणाः इत्यार्य्यादेशः। भवत्वेवं तावत्। प्रकाशम्। कुमार! अलमावेगेन। आसनस्थं कुमारं किञ्चिद् विज्ञापयितुमिच्छामि।

मल। उपविश्य। सखे! किमसि वक्तुकामः?

भागु। कुमार! इह खलु अर्थशास्त्रव्यवहारिणामर्थवशादरिमित्रोदासीनव्यवस्था न लौकिकानामिव स्वेच्छा-

---

सुहृत्सु खादित्यनेनास्य वचनस्य न कथञ्चन मिथ्यात्वसम्भव इति भावः। येन श्रवणेन मे मम इदं पितुर्वधव्यसनं पितृविनाशजनितकष्टं चिरादपि पुरातनमपि अद्य द्विगुणमिव वर्द्धते। रुचिरावृत्तम्।

(७) मित्रमिति। अयं राक्षसः मम मित्रम् इति विस्रम्भतः विश्वासात् त्वयि निवेशितसर्व्वकार्य्यः समर्पितसकलराज्यभारः निर्वृतचित्तवृत्तिः निश्चिन्तमनोवृत्तिः तात आसीदिति पदद्वयमध्याहार्य्यम्। ननु राक्षस! तं तातं बन्धुजनाक्षितोयैः बन्धुजनाश्रुभिः सह निपात्य अन्वर्थतः योगार्थतः अपि राक्षसोऽसि, राक्षसवत् क्रूरकर्मकारित्वादिति भावः। वसन्ततिलकं वृत्तम्।

वशात्। यतस्तस्मिन् काले सर्वार्थसिद्धिं राजानमिच्छतो राक्षसस्य चन्द्रगुप्तादपि बलीयस्तया सुगृहीतनामा देवः पर्वतेश्वर एव अर्थपरिपन्थी (ङ) महानरातिरासीत्। तस्मिंश्च काले, राक्षसेनेदमनुष्ठितमिति नातिदोषमिवात्र पश्यामि। पश्यतु कुमारः,

मित्राणि शत्रुत्वमिवानयन्ती, मित्रत्वमप्यर्थवशाच्च शत्रून्।
नीतिर्नयत्यस्मृतपूर्ववृत्तं जन्मान्तरं जीवत एव पुंसः॥ ८॥

तदत्र वस्तुन्यनुपालभ्यो राक्षसः, आ नन्दराज्यलाभादनुग्राह्यश्च परतस्तस्य परिग्रहे, परित्यागे वा, कुमारः प्रमाणं भविष्यति।

मल। एवं भवतु। सखे! सम्यक् दृष्टवानसि। अन्यथास्य [अमात्यस्य] वधे प्रकृतिक्षोभः स्यात्। एवञ्च सन्दिग्धो विजयः स्यादस्माकम्।

प्रविश्य पुरुषः। जअदु जअदु कुमारो। अअं अज्जस्स गुम्मट्ठाणाधिकिदो दीहचक्खू अज्जं विण्णवेदि, एसो क्खु

---

(ङ) अर्थवशात् कार्य्यवशात् अरिमित्रोदासीनव्यवस्था अयम् अरिः शत्रुः अयं मित्रम् अयम् उदासीनः मध्यस्थः इत्येवंरूपा व्यवस्था विचारः। बलीयस्तया प्राबल्येन। अर्थपरिपन्थी कार्य्यप्रतिद्वन्द्वी।

(८) मित्राणीति। नीतिः अर्थशास्त्रनियमः अर्थवशात् कार्य्यवशात् मित्राणि शत्रुत्वं शत्रूंश्च मित्रत्वम् आनयन्ती प्रापयन्ती अत एव जीवत एव पुंसः पुरुषान् अस्मृतपूर्ववृत्तम् अचिन्तितपूर्ववृत्तान्तं जन्मान्तरं नयति। इन्द्रवज्रावृत्तम्।

अण्णेहिं कडआदो णिक्कमन्तो अगहीदमुद्दो सलेहो पुरिसो गहीदो, ता पच्चक्खीकरेदु एणं अज्जो त्ति (३२)।

भागु। भद्र! प्रवेशय।

पुरु। जं अज्जो आणवेदि त्ति (३३)। निष्क्रान्तः।

ततः प्रविशति पुरुषेणानुगम्यमानः संयतः सिद्धार्थकः।

सिद्धा। स्वगतम्।

तिप्पन्तीए गुणेसुं दोसेसुं परंमुहं करन्तीए।
अह्मारिसं जणणीए पणमामो सामिभत्तीए (३४)॥ ६॥

पुरु। उपसृत्य। अज्ज! अअं सो पुरिसो (३५)।

भागु। नाट्येनावलोक्य। भद्र! किमयमागन्तुकः, आहोस्विदिहैव कस्यचित् परिग्रहः (ढ)?

---

(३२) जयतु जयतु कुमारः। अयम् आर्यस्य गुल्मस्थानाधिकारी दीर्घचक्षुर्विज्ञापयति, एष खलु अस्माभिः कटकात् निष्क्रामन् अगृहीतमुद्रः सलेखः पुरुषो गृहीतः, तत् प्रत्यक्षीकरोत्वेनमार्य इति।
(३३) यदार्य आज्ञापयतीति।
(३४) तृप्यन्त्यै गुणेषु, दोषेषु पराङ्मुखं कुर्वत्यै।
अस्माकं जनन्यै प्रणमामः स्वामिभक्त्यै॥
(३५) अयं स पुरुषः।

---

(६) तृप्यन्त्यै इति। गुणेषु अत्यानामिति शेषः सत्सु, तृप्यन्त्यै प्रीतिदायिन्यै, दोषेषु सत्सु पराङ्मुखं कुर्वत्यै, दूरीकुर्वत्यै अस्माकं जनन्यै पोषणकर्तृत्वधर्मादिति भावः स्वामिभक्त्यै प्रणमामः।
(ढ) आगन्तुकः उदासीनः। परिग्रहः आश्रितः।

सिद्धा। अज्ज! अहं क्खु अमच्चरक्खसस्स [सेवओ] पासपलिवत्ती (२६)।

भागु। भद्र! तत् किमर्थमगृहीतमुद्रः कटकान्निष्क्रामसि ?

सिद्धा। अज्ज! कज्जगोरवेण म्हि तुवराइदो (२७)।

भागु। कीदृशं तत् कार्य्यगौरवं, यद्राजशासनमुल्लङ्घयसि।

मल। सखे! भागुरायण! लेखमुपानय।

सिद्धा। भागुरायणाय लेखमर्पयति।

भागु। सिद्धार्थकहस्ताल्लेखं गृहीत्वा मुद्रां दृष्ट्वा। कुमार! अयं लेखः, राक्षसनामाङ्कितेयं मुद्रा।

मल। मुद्रां परिपालयन्नुद्घाट्य, दर्शय।

भागु। तथा कृत्वा दर्शयति।

मल। गृहीत्वा वाचयति। स्वस्ति यथास्थाने कुतोऽपि कोऽपि कमपि, पुरुषविशेषमवगमयति। अस्मद्विपक्षं निराकृत्य, दर्शिता सत्यवादिता सत्यवता। साम्प्रतमेषामपि प्रथममुपन्यस्तसन्धीनामस्मत्सुहृदां, पूर्वप्रतिज्ञातसन्धिपरिपणवस्तुप्रतिपादनप्रोत्साहनेन सत्यसन्धः, प्रीतिमुत्पादयितुमर्हति। एते ह्येवमुपगृहीताः सन्तः, स्वाश्रयविनाशेनैवोपकारिणमाराधयिष्यन्ति। अविस्मृतमप्येतत् सत्यवतः स्मारयामि, एतेषां मध्ये केचिदरेः कोषदन्तिश्यामर्थिनः,

(२६) आर्य्य! अहं खलु अमात्यराक्षसस्य [सेवकः] पार्श्वपरिवर्त्ती।
(२७) आर्य्य! कार्य्यगौरवेणास्मि त्वरितः।

केचिद्दु विषयेरीति, अस्मान् प्रति अलङ्कारत्रयञ्च, यत् सत्यव्रतानुप्रेषितं, तदुपगतम् । अस्माभिरपि लेखस्याशून्यार्थं किञ्चिदनुप्रेषितं, तदुपगमनीयं, वाचिकञ्चाप्ततमात् सिद्धार्थकात् श्रोतव्यमिति ।

मल । सखे ! भागुरायण ! कीदृशो लेखार्थः ?

भागु । भद्र ! सिद्धार्थक ! कस्यायं लेखः ?

सिद्धा । अज्ज ! ण आणामि (३८) ।

भागु । हं धूर्त्त ! लेखो नीयते, नच ज्ञायते कस्येति सर्वं, तावत् तिष्ठतु, वाचिकं त्वत्तः केन श्रोतव्यम् ?

सिद्धा । भयं नाटयन् । तुह्मेहिं (३९) ।

भागु । किमस्माभिः ?

सिद्धा । तुह्मेहिं गहीदो, ण आणामि का कधेति (४०)

भागु । सक्रोधम् । एष ज्ञास्यसि । भद्र ! भासुरक ! वहिर्नीत्वा, ताड्यतां तावत्, यावत् सर्वमनेन कथितं भवेत् ।

पुरु । जं अज्जो आणवेदि त्ति (४१) । सिद्धार्थकेन सह निष्क्रान्तः ।

पुनः प्रविश्य । अज्ज ! इयं तस्स ताडीअमाणस्स णाममुद्दालंञ्छिदा आहरणपेडिआ णिवड़िदा (४२) ।

---

(३८) आर्य ! न जानामि ।

(३९) युष्माभिः ।

(४०) युष्माभिर्गृहीतो न जानामि का कथेति ।

(४१) यद् आर्य्य आज्ञापयति इति ।

(४२) आर्य्य ! इयं तस्य ताड्यमानस्य नाममुद्रालाञ्छिता आभरणपेटिका निपतिता ।

भागु। विलोक्य। कुमार ! इयमपि राक्षसमुद्राङ्कितैव।

मल। अयं लेखस्याशून्यार्थो भविष्यति। इमामपि मुद्रां परिपालयन् द्वाटय दर्शय।

भागु। तथा कृत्वा दर्शयति।

मल। विलोक्य। अये ! तदिदमाभरणं, यन्मया स्वशरीरादवतार्य्य राक्षसाय प्रेषितम्। व्यक्तं चन्द्रगुप्तस्यायं लेखः।

भागु। कुमार ! एष निर्णीयते संशयः। भद्र ! पुनरपि ताड्यताम्।

पुरु। जं अज्जो आणवेदि त्ति। निष्क्रम्य पुनः प्रविश्य च। अज्ज ! एसो क्खु, ताड़ीअमाणो विराणवेदि कुमारस्स स्सयं ज्जेव णिवेदेमि त्ति (४३)।

मल। प्रवेशय।

पुरु। जं कुमारो आणवेदि त्ति (४४)। निष्क्रम्य सिद्धार्थकेन सह प्रविशति।

सिद्धा। पादयोर्निपत्य। अभएण मे कुमारो पसादं करेदु (४५)।

मल। भद्र ! भद्र ! अभयमेव परायत्तजनस्य, तन्निवेद्यतां यथावस्थितम्।

---

(४३) यत् आर्य्य आज्ञापयति। आर्य्य ! एष खलु ताड्यमानो विज्ञापयति. कुमारस्य स्वयमेव निवेदयामीति।

(४४) यत् कुमार आज्ञापयतीति।

(४५) अभयेन मे कुमारः प्रसादं करोतु।

सिद्धा । णिसामेदु कुमारो, अहं क्खु, अमच्चरक्खसेण इमं लेहं देइअ, चन्दउत्तसकासं पेसिदोम्हि (४६) ।

मल । भद्र ! वाचिकमिदानीं श्रोतुमिच्छामि ।

सिद्धा । कुमार ! संदिट्ठोम्हि अमच्चरक्खसेण, जधा, एदे मम पिअवअस्सा पञ्च राआणो तुए सह पढमसमुप्पण्णसन्धाणा । जहा, कुलूदाहिवो चित्तवम्मा, मलअजणवदाधिवो सीहणादो, कस्मीरदेसणाहो पुक्खरक्खो, सिन्धुराओ सिन्धुसेणो, पारसीआधिवदी मेहक्खो त्ति । एत्थ ज्जेव पढम भणिदा तिण्णि राआणो मलअकेदुणो विसअं अहिलसन्ति [इच्छन्ति] इदरे वि दुवे कोसहत्थिबलं त्ति । ता जधा, चाणक्कं णिराकरिअ महाराएण, मम प्पीदी उप्पादिआ, तधा एदाणं पि पढमभणिदो अत्थो प्पसादइदव्वो, एत्तिको राअसन्देसो त्ति (४७) ।

---

(४६) निशामयतु कुमारः, अहं खलु अमात्यराक्षसेन, इमं लेखं दत्त्वा, चन्द्रगुप्तसकाशं प्रेषितोऽस्मि ।

(४७) कुमार ! संदिष्टोऽस्मि अमात्यराक्षसेन, यथा, एते मम प्रियवयस्याः पञ्च राजानस्त्वया सह प्रथमसमुत्पन्नसन्धानाः । यथा, कुलूताधिपश्चित्रवर्मा, मलयजनपदाधिपतिः सिंहनादः, काश्मीरदेशाधिपः पुष्कराक्षः, सिन्धुराजः सिन्धुसेनः, पारसीकाधिपतिर्मेघाक्ष इति । अत्रैव प्रथमभणितास्त्रयो राजानः मलयकेतोर्विषयमभिलषन्ति (इच्छन्ति) इतरावपि द्वौ कोषहस्तिबलमिति । तद् यथा चाणक्यं निराकृत्य महाराजेन मम प्रीतिरुत्पादिता, तथा एतेषामपि प्रथमभणितोऽर्थः प्रसादयितव्य इति एतावान् राजसन्देश इति ।

मल। स्वगतम्। कथं चित्रवर्म्मादयोऽपि मामभिद्रुह्यन्ति, अतएवैतेषां राक्षसे निरतिशया प्रीतिः। प्रकाशम्। विजये! अमात्यराक्षसं द्रष्टुमिच्छामि।

प्रती। जं कुमारो आणवेदि त्ति (४८)। निष्क्रान्ता।

ततः प्रविशत्यासनस्थः स्वभवनगतः पुरुषेणानुगम्यमानः सचिन्तो राक्षसः।

राक्ष। स्वगतम्। सम्पूर्णमस्मद्बलं चन्द्रगुप्तबलैरिति, यत्, सत्यं न मे मनसः शुद्धिरस्ति। कुतः?

साध्ये निश्चितमन्वयेन कथि[घटि]तं बिभ्रत् स्वपक्षे स्थितिं,
व्यावृत्तञ्च विपक्षतो भवति, यत् तत् साधनं सिद्धये।
यत् साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धञ्च यत्
तस्याङ्गीकरणेन वादिन इव स्यात् स्वामिनो निग्रहः॥१०॥

(४८) यत् कुमार आज्ञापयतीति।

(१०) साध्ये इति। यत् साधनं सैन्यादि अन्वयेन आनुगत्येन सततसाहचर्य्येण कथितं स्वपक्षे आत्मपक्षे न परपक्षे स्थितिं बिभ्रत् तथा विपक्षतः विरुद्धपक्षात् व्यावृत्तं निवृत्तम् अत एव साध्ये निष्पाद्ये शत्रुपराजयादिरूपे निश्चितं निःसंशयेन ज्ञातसामर्थ्यं तत् सिद्धये भवति। पक्षान्तरे यत् साधनं धूमादि साध्ये पर्वतो वह्निमानित्यत्र वह्निरूपे वस्तुनि निश्चितं निःसंशयेन सिद्धान्तितम् अन्वयेन अवश्यम्भा-वितया वंशपरम्परया वा कथितं स्वपक्षे महानसादौ स्थितिं बिभ्रत् स्थितमित्यर्थः, तथा विपक्षतः ह्रदादेः व्यावृत्तं तत्राविद्यमानमित्यर्थः तत् सिद्धये पर्वते वह्निरस्तीत्यनुमानाय भवति। यत् तु साधनं स्वयमेव साध्यं भयादिप्रदर्शनेन वशीकार्य्यं न तु स्वतः आयत्तमित्यर्थः उभयोः पक्षयोः तुल्यम् उभयमनोरञ्चित्वादिति भावः, सुतरां पक्षे आत्मवर्गे विरुद्धं विपरीतं पूर्वप्रतिज्ञानुरूपकार्य्याकरणादिति भावः। पक्षान्तरे

अथवा, तैस्तैर्विज्ञातापरागहेतुभिः प्राक्परिगृहीतोपजापैरापूर्णमिति (थ) न विकल्पयितुमर्हामि । प्रकाशम् । प्रियंवदक ! उच्यतामस्मद्वचनात् कुमारानुयायिनो राजानः, सम्प्रति दिने दिने प्रत्यासीदति कुसुमपुरम्, अतः परिकल्पितविभागैर्भवद्भिः प्रयाणे (त) प्रस्थातव्यम् । कथमिति ?

प्रस्थातव्यं पुरस्तात् खसमगधगणैर्मामनु व्यूढसैन्यैर्गान्धारैर्मध्ययाने सयवनपतिभिः संविधेयः प्रयत्नः ।
पश्चाद् गच्छन्तु वीराः, शकनरपतयः, संवृताश्चेदिहूणैः, कौलूताद्यश्च शिष्टः पथि परिवृणुयाद्राजलोकः कुमारम् ॥११॥

---

यत् साधनं स्वयं साध्यं साधनान्तरेण निष्पाद्यम्, उभयोः पक्षयोः पर्वतजलयोस्तुल्यं पक्षे पर्वतादौ विरुद्धं तस्य साधनस्य अङ्गीकरणेन आश्रयेण वादिन इव स्वामिनः निग्रहः पराजयः स्यादिति । शार्दूलविक्रीडितं वृत्तम् ।

(थ) प्राक् पूर्वं परिगृहीतः ज्ञातः उपजापः भेदः येषां तादृशैः प्रधानपुरुषैः भद्रभटादिभिरिति शेषः ।

(त) प्रत्यासीदति निकटे वर्त्तते । परिकल्पितविभागैः कृतसैन्यविभागैः । प्रयाणे संग्रामयात्रायाम् ।

(११) प्रस्थातव्यमिति । माम् अनु मम पश्चात् खसमगधगणैः खसमगधराजभिः व्यूढं विभक्तं सैन्यं यैः तादृशैः सद्भिः पुरस्तात् अग्रे प्रस्थातव्यम् । सयवनपतिभिः यवनपतिसहितैः गान्धारैः मध्ययाने सैन्यमध्यगमने यत्नः विधेयः कर्त्तव्यः । तत् पश्चात् चेदिहूणैः संवृताः सहिताः वीराः शकनरपतयः गच्छन्तु । शिष्टः अवशिष्टः कौलूताद्यः कौलूतप्रभृतिः राजलोकः पथि कुमारं मलयकेतुं परिवृणुयात् परिवार्य गच्छेत् । स्रग्धराछन्दः ।

प्रियं। जं अमच्चो आणवेदि त्ति (४९)। निष्क्रान्तः।

प्रविश्य प्रतीहारी। जअदु जअदु अमच्चो। अमच्चं इच्छदि कुमारो पेक्खिदुं (५०)।

राक्ष। भद्रे! मुहूर्त्तं तिष्ठ। कः कोऽत्र भोः?

प्रविश्य पुरुषः। आणवेदु अमच्चो (५१)।

राक्ष। भद्र! शकटदासं प्रति ब्रूहि, यथा परिधापिता वयमाभरणं कुमारेण, तन्न युक्तमिदानीमस्माभिरनलङ्कृतैः कुमारदर्शनमनुभवितुम्, अतो यत् तदलङ्करणत्रयं क्रीतं तन्मध्यादेकं दीयतामिति।

पुरु। जं अमच्चो आणवेदि त्ति। निष्क्रम्य पुनः प्रविश्य च। अमच्च! इदं तं अलङ्करणं (५२)।

राक्ष। नाट्येनावलोक्यात्मानमलङ्कृत्योत्थाय च। भद्रे! राजकुलगामिनं मार्गमादेशय।

प्रती। एदु एदु अमच्चो (५३)।

राक्ष। स्वगतम्। अधिकारपदं (थ) नाम निर्दोषस्यापि पुरुषस्य महदाशङ्कास्थानम्। कुतः?

---

(४९) यत् अमात्य आज्ञापयतीति।

(५०) जयतु जयत्वमात्यः। अमात्यमिच्छति कुमारः प्रेक्षितुम्।

(५१) आज्ञापयत्वमात्यः।

(५२) यत् अमात्य आज्ञापयतीति। अमात्य! इदं तदलङ्करणम्।

(५३) एतु एतु अमात्यः।

---

(थ) अधिकारपदं दासत्वम्।

भयं तावत् सेव्यादभिनिविशते सेवकजनं
ततः प्रत्यासन्नाद् भवति हृदयेष्वेव निहितम् ।
अतोऽध्यारूढानां पदमसुजनद्वेषजननं,
मतिः सोच्छ्रायाणां पतनमनुकूलं कलयति ॥ १२ ॥

प्रती। परिक्रम्य। अमच्च ! अअं कुमारो चिट्ठदि, ता उपसप्पदु णं अमच्चो (५४)।

राच । नाट्येनावलोक्य । अये ! कुमारस्तिष्ठति । य एषः

पादाग्रे दृशमवधाय निश्चलन्तीं,
शून्यत्वादपरिगृहीततद्विशेषाम् ।
वक्त्रेन्दुं वहति करेण दुर्वहाणां
कार्य्याणां कृतमिव गौरवेण नम्रम् ॥ १३ ॥

---

(५४) अमात्य ! अयं कुमारस्तिष्ठति, तदुपसर्पत्वेनममात्यः ।

---

(१२) भयमिति । सेव्यात् जनात् स्वामिन इत्यर्थः भयं तावत् प्रथममित्यर्थः सेवकजनम् अभिनिविशते आश्रयति, ततः प्रत्यासन्नात् स्वामिनः पार्श्वचरात् भयं हृदयेषु निहितं भवति, अध्यारूढानाम् उन्नतपदस्थानां भृत्यानामिति शेषः पदं कर्म असुजनद्वेषजननम् असुजनस्य दुर्जनस्य द्वेषजननं हिंसावर्द्धनं भवति । अतः कारणात् सोच्छ्रायाणां महामहिमशालिनां भृत्यानां मतिः पतनम् अनुकूलं नियतं कलयति, पतनभयमेव चिन्तयतीत्यर्थः । शिखरिणीवृत्तम् ।

(१३) पादाग्रे इति । शून्यत्वात् निरवलम्बनत्वात् अपरिगृहीततद्विशेषां न परिगृहीतः ज्ञातः तद्विशेषः तस्य पादाग्रस्य विशेषो रूपादिर्यया तादृशीं निश्चलन्तीं स्थिरां दृशं पादाग्रे अवधाय स्थापयित्वा दुर्वहाणां कार्य्याणां चिन्तनीयवस्तूनां गौरवेण भारेण नम्रं कृतमिव

उपसृत्य। विजयतां विजयतां कुमारः।

मल। आर्य्य! अभिवादये। इदमासनमास्यताम्।

राक्ष। उपविशति।

मल। अमात्य! चिरमदर्शनेनार्य्यस्य वयमुद्विग्नाः।

राक्ष। कुमार! प्रयाणे प्रतिविधानमनुतिष्ठता मया, कुमारादयमुपालम्भोऽधिगतः (द)?

मल। अमात्य! प्रयाणे कथं प्रतिविहितमिति श्रोतुमिच्छामि।

राक्ष। कुमार! एवमादिष्टाः कुमारस्यानुयायिनो राजानः। प्रस्थातव्यमित्यादिश्लोकं (१५७ पृष्ठस्थम्) पुनः पठति।

मल। स्वगतम्। विज्ञायते, कथं य एव मद्विनाशेन चन्द्रगुप्तमाराधयितुमुद्यतास्त एव मां परिवृण्वन्ति। प्रकाशम्। आर्य्य! अस्ति कश्चिद् यः कुसुमपुरं प्रति गच्छति, तत आगच्छति वा।

राक्ष। कुमार! अवसितमिदानीं गतागतप्रयोजनम्। ननु पञ्चषैरहोभिर्वयमेव तत्र गन्तारः (ध)।

मल। स्वगतम्। विज्ञायते। प्रकाशम्। यद्येवं, तत् किमयमार्य्येण सलेखः पुरुषः कुसुमपुरं प्रस्थापितः?

---

वक्त्रेन्दुं मुखचन्द्रं करेण वहति धारयति करतले मुखं निवेश्य पादाग्रे दृष्टिं निधाय किमपि चिन्तयतीत्यर्थः। प्रहर्षिणीवृत्तम्।

(द) प्रतिविधानम् उद्योगम्। उपालम्भः तिरस्कारः।

(ध) अवसितं समाप्तम्। गन्तारः गतप्रायाः।

राक्ष । विलोक्य । अये ! सिद्धार्थकः । भद्र ! किमिदम् ?

सिद्धा । सभयं लज्जां नाटयन् । पसीददु पसीददु अमच्चो अमच्च ! ताड़ीअन्तेण मए ण पारिदं अमच्चस्स रहस्सं धारिदुं (५५) ।

राक्ष । भद्र ! कीदृशं तत् रहस्यमिति, न खल्ववगच्छामि ।

सिद्धा । ननु विसवेमि, ताड़ीअन्तेण मए (५६) । इत्यर्द्धोक्ते सभयमधोमुखस्तिष्ठति ।

मल । भागुरायण ! स्वामिनः पुरस्ताद् भीतो लज्जितश्च, नैष कथयिष्यति, अतः स्वयमेव आर्य्याय कथय ।

भागु । यदाज्ञापयति कुमारः । अमात्य ! एष कथयति, यथाहममात्यराक्षसेन लेखं दत्त्वा, वाचिकञ्च सन्दिश्य, चन्द्रगुप्तसकाशं प्रेषित इति ।

राक्ष । भद्र ! सिद्धार्थक ! अपि सत्यम् ?

सिद्धा । लज्जां नाटयन् । एदं ताडीअन्तेण मए णिवेदिदं (५७) ।

राक्ष । कुमार ! अनृतमेतत् । ताड्यमानः किं न ब्रूयात् ?

मल । भागुरायण ! दर्शय लेखं, वाचिकञ्चायमस्मै स्वभृत्यः कथयिष्यति ।

---

(५५) प्रसीदतु प्रसीदत्वमात्यः । अमात्य ! ताड्यमानेन मया न पारितममात्यस्य रहस्यं धारयितुम् ।

(५६) ननु विज्ञापयामि, ताड्यमानेन मया ।

(५७) इदं ताड्यमानेन मया निवेदितम् ।

भागु। श्रुत्वा लेखमवलोकयन्। स्वस्ति यथास्थाने कुतोऽपि कोऽपि कमपि पुरुषमवगमयति। इति (२५२ पृष्ठस्थम्) वाचयति।

राच। कुमार! कुमार! शत्रोः प्रयोग एषः।

मल। लेखस्याशून्यार्थमार्य्येणेदमाभरणमनुप्रेषितम् (न) इति तत् कथं शत्रोः प्रयोग एष स्यात्। इत्याभरणं दर्शयति

राच। आभरणं निर्वर्ण्य। कुमार! नैतन्मयानुप्रेषितम् एतद्धि कुमारेण मह्यं दत्तं, मया च परितोषस्थाने सिद्धार्थकाय दत्तम्।

भागु। भो अमात्य! ईदृशस्याभरणविशेषस्य, विशेषतः कुमारेण स्वगात्रादवतार्य्य, दत्तस्यायं परित्यागभूमिः (प)।

मल। वाचिकमप्याप्ततमात् (फ) सिद्धार्थकात् श्रोतव्यमिति लिखितमार्य्येण।

राच। कुतो वाचिकम्? कस्य वा लेखः? अयमेवास्मदीयो न भवति।

मल। इयं तर्हि कस्य मुद्रा?

राच। कुमार! कपटमुद्रामप्युत्पादयितुं (ब) शक्नुवन्ति धूर्त्ताः।

भागु। कुमार! सम्यगमात्यो विज्ञापयति। भद्र! सिद्धार्थक! केनायं लिखितो लेखः?

---

(न) अशून्यार्थं पूर्णार्थं सम्पूर्णविश्वासार्थमित्यर्थः।

(प) परित्यागभूमिः दानपात्रम्।

(फ) आप्ततमात् अतिविश्वस्तात्।

(ब) कपटमुद्रां कृत्रिममुद्राम्।

सिद्धा । राक्षसमुखमवलोक्य तूष्णीमधोमुखस्तिष्ठति ।

भागु । अलं, पुनरात्मानं ताड़यित्वा कथय ।

सिद्धा । अज्ज ! सअड़दासेण (५८) ।

राक्ष । कुमार ! यदि शकटदासेन लिखितस्तर्हि मयैव लिखितः ।

मल । विजये ! शकटदासं द्रष्टुमिच्छामि ।

प्रती । जं कुमारो आसवेदि त्ति (५९) ।

भागु । स्वगतम् । न खल्वनिश्चितार्थमार्य्यचाणक्यप्रणिधयोऽभिधास्यन्ति, आगत्य शकटदासो वा, सोऽयं लेख इति प्रत्यभिज्ञाय पूर्ववृत्तं (भ) प्रकाशयेत् । एवं सति सन्दिहानो मलयकेतुरस्मिन् प्रयोगे श्लथादरो भवेत् । प्रकाशम् । कुमार ! न कदाचिदपि शकटदासोऽमात्यराक्षसस्याग्रतो मया लिखित इति प्रतिपत्स्यते, अतोऽन्यलिखितमस्यानीयतां, यतो वर्णसंवाद एवैतत् सर्वं विभावयिष्यति ।

मल । विजये ! एवं क्रियताम् ।

भागु । कुमार ! मुद्रामप्यानयतु इयम् ।

मल । उभयमपि क्रियताम् ।

प्रती । जं कुमारो आसवेदि त्ति (६०) ।

---

(५८) आर्य्य ! शकटदासेन ।

(५९) यत् कुमार आज्ञापयतीति ।

(६०) यत् कुमार आज्ञापयतीति ।

---

(भ) पूर्ववृत्तं सिद्धार्थकेन मया शकटदासहस्तेन लेखितमिदं पत्रमिति प्रथमाङ्के दर्शितवृत्तान्तम् ।

निष्क्रम्य पुनः प्रविश्य । कुमार ! इदं क्खु, तं सअडदासेण सहत्थलिहिदं पत्तअं, मुद्दा अ (६१)।

मल । उभयमपि नाट्येनावलोक्य । आर्य ! संवदन्त्यक्षराणि ।

राक्ष । स्वगतम् । संवदन्त्यक्षराणि, शकटदासस्तु मम मित्रमिति च विसंवदन्त्यक्षराणि, तत् किं शकटदासेन लिखितम् ?

स्मृतं स्यात् पुत्त्रदाराणां विस्मृताः स्वामिभक्तयः ।
चलेष्वर्थेषु लुब्धेन न यशःस्वनपायिषु ? ॥ १४ ॥

अथवा, कः सन्देहः ?

मुद्रा तस्य कराङ्गुलिप्रणयिनी, सिद्धार्थकस्तत्सुहृत्
तस्यैवापरलेख्यसूचितमिदं पत्रं प्रयोगाश्रयम् ।
सुव्यक्तं शकटेन भेदपटुना सन्धाय सार्धं परै-
र्भर्तुः स्नेहपराङ्मुखेन, कृपणं प्राणार्थिना चेष्टितम् ॥ १५ ॥

---

(६१) कुमार ! इदं खलु तत् शकटदासेन स्वहस्तलिखितं पत्रं, मुद्रा च ।

---

(१४) स्मृतमिति । चलेषु नश्वरेषु अर्थेषु न तु अनपायिषु अविनश्वरेषु यशःसु, लुब्धेन सता पुत्रदाराणां कर्मणि षष्ठी, स्मृतं स्यात्, स्वामिभक्तयः विस्मृताः ? अनुष्टुप्वृत्तम् ।

(१५) मुद्रेति । मुद्रा तस्य शकटदासस्य कराङ्गुलिप्रणयिनी कराङ्गुलिस्थिता, नान्येन तस्या लाभसम्भव इति भावः, सिद्धार्थकः अयं तत्सुहृत् तस्य मित्रं प्रयोगाश्रयम् अभियोगसम्बन्धम् इदं पत्रं तस्यैव शकटदासस्य अपरलेख्यसूचितम् अपरेण लेख्येन सूचितं संपादितम् अतः

मल । आर्य्ये ! अलङ्कारत्रयं श्रीमती यदनुप्रेषितं, तदु-पागतमित्यार्य्येण यल्लिखितं, तन्मध्यादेकं किमिदम् ? निर्वर्ण्यात्मगतम् । कथं तातेन धृतपूर्वमिदमाभरणम् ? प्रका-शम् । आर्य्य ! कुतोऽयमलङ्कारः ?

राच । वणिग्भ्यः क्रयादधिगतः ।

मल । विजये ! अपि प्रत्यभिजानाति भवती भूषण-मिदम् ?

प्रती । निर्वर्ण्य सवाष्पम् । कुमार ! कहं ण पच्चभिआ-णिस्सं । इमं क्खु सुगिहीदणामधेएण देएण पव्वदीसरेण धारिदपूव्वं (६२) ।

मल । सवाष्पम् । हा तात !

एतानि तानि तव भूषणवल्लभस्य
गात्रोचितानि कुलभूषण ! भूषणानि ।
यैः शोभितोऽसि, मुखचन्द्रकृतावभासो
नक्षत्रवानिव शरत्समयप्रदोषः ॥ १६ ॥

---

(६२) कथं न प्रत्यभिज्ञास्यामि । इदं खलु सुगृहीतनामधेयेन देवेन पर्वतेश्वरेण धारितपूर्वम् ।

---

शकटेन प्राणार्थिना जीवनार्थिना अत एव भर्तुः स्नेहपराङ्मुखेन सुतरां भेदपटुना उपजापकुशलेन सता सुव्यक्तं निश्चितं कृपणं दीनं यथा तथा चेष्टितं व्यवसितम् । शार्दूलविक्रीडितं वृत्तम् ।

(१६) एतानीति । हे कुलभूषण ! भूषणवल्लभस्य प्रियालङ्कारस्य तव गात्रोचितानि गात्रपरिच्छिन्नानि एतानि तानि भूषणानि, यैः भूषणैः नक्षत्रवान् सतारः शरत्समयप्रदोषः शारदीयनिशामुखमिव

राक्ष। स्वगतम्। कथं पर्वतेश्वरधृतपूर्वाणीत्याह? प्रकाशम्। अथ्यतमेतान्यपि तेन चाणक्यप्रयुक्तेन वणिज्जनेनास्मासु विक्रीतानि।

मल। आर्य्य! तातेन धृतपूर्वाणामाभरणविशेषाणां विशेषतश्चन्द्रगुप्तहस्तगतानां वणिग्भ्यः क्रयादधिगम इति, न युज्यते एतत्, अथवा युज्यते एव।

चन्द्रगुप्तस्य विक्रेतुरधिकं लाभमिच्छतः।
कल्पिता मूल्यमेतेषां क्रूरेण भवता वयम् ॥ १७ ॥

राक्ष। आत्मगतम्। अहो! सुश्लिष्टोऽभूदेष प्रयोगः (म)। कुतः?

लेखोऽयं न ममेति, नोत्तरमिदं, मुद्रा मदीया यतः
सौहार्दं शकटेन खण्डितमिति श्रद्धेयमेतत् कथम्?
मौर्य्ये भूषणविक्रयं नरपतौ को नाम सम्भावयेत्?
तस्मात् सम्प्रतिपत्तिरेव हि वरं न ग्राम्यमत्रोत्तरम् ॥ १८ ॥

---

मुखचन्द्रकृतावभासः मुखं चन्द्र इव तस्मिन् कृतः अवभासः दीप्तिः यस्य तादृशः सन् शोभितोऽसि। अन्यत्र तेन कृतः अवभासः प्रकाशः यस्येति विग्रहः। वसन्ततिलकं वृत्तम्।

(१७) चन्द्रगुप्तस्येति। क्रूरेण कृतघ्नेन भवता अधिकं लाभम् इच्छतः विक्रेतुश्चन्द्रगुप्तस्य एतेषाम् आभरणानां मूल्यं वयमेव कल्पिताः, एतदाभरणं हृत्वा भवत्सकाशात् वयमेव चन्द्रगुप्तेन क्रीता इत्यर्थः। अनुष्टुप्वृत्तम्।

(म) सुश्लिष्टः सुदृढः।

(१८) लेख इति। अयं लेखः न मम इति इदम् उत्तरं न, यतः यस्मात् मदीया मुद्रा एषेति शेषः। शकटेन सौहार्दं मित्रत्व

मल। एतदार्य्यं पृच्छामि।

राच। य आर्य्यस्तं पृच्छ। वयमिदानीमनार्य्याः संवृत्ताः।

मल।

मौर्य्योऽसौ स्वामिपुत्रः, परिचरणपरो मित्रपुत्रस्तवाहं
दाता सोऽर्थस्य तुभ्यं, स्वमतमनुगतस्त्वन्तु मह्यं ददासि।
दास्यं सत्कारपूर्वं ननु सचिवपदन्तत्र ते, स्वाम्यमत्र,
स्वार्थे कस्मिन् समीहा पुनरधिकतरे त्वामनार्य्यं करोति॥१९

राच। कुमार! एवमभियुक्तव्यवहारिणा भवतैव मे

---

खण्डितम् इति एतत् लोकैः कथं श्रद्धेयं न कथमपीत्यर्थः, नरपतौ मौर्य्ये चन्द्रगुप्ते भूषणविक्रयम् अलङ्कारविक्रेतृत्वं को नाम सम्भावयेत् विश्वसेत् न कोऽपीत्यर्थः, तस्मात् अत्र विषये सम्प्रतिपत्तिः स्वीकार एव उत्तरं वरं श्रेष्ठं, याच्यम् इतरजनोचितम् अपलापरूपम् उत्तरं न वरमित्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्।

(१९) मौर्य्य इति। असौ मौर्य्यः चन्द्रगुप्तः तव स्वामिपुत्रः स्वामिनो नन्दस्य पुत्रः, अहं तव मित्रपुत्रः मित्रस्य पर्वतेश्वरस्य पुत्रः अथच परिचरणपरः सेवाधीनः, स मौर्य्यः तुभ्यम् अर्थस्य वेतनरूपस्य दाता, अनुगतः अनुरूपविवेचकः त्वं पुनः मह्यं स्वमतं स्वाभिप्रायानुरूपम् अर्थमिति शेषः ददासि, ननु भोः! तत्र ते तव सचिवपदरूपं दास्यं सत्कारपूर्वं सम्मानपूर्णमस्तीति शेषः, अत्र मयि तु ते स्वाम्यं प्रभुत्वम्, अतः कस्मिन् अधिकतरे स्वार्थे स्वाभिलषिते विषये समीहा चेष्टा त्वाम् अनार्य्यम् असाधुं करोति, अधिकाशयैव ह्यधमकार्य्यप्रवृत्तिर्भवेत् परं सत्पक्षाश्रयणे एव तव अधिकाभीष्टसिद्धिस्तत् कथं मादृत्स्वज्य विपक्षपक्षमाश्रयसीति वाक्यार्थः। स्रग्धरावृत्तम्।

निर्णयो दत्तः । कुतः ? मौर्य्योऽसौ स्वामिपुत्र इति युष्मदस्मदोर्व्य-त्ययेन (य) पठति ।

मल । लेखमलङ्करणस्थगिकां च विनिर्द्दिश्य । इदमिदानीं किम् ?

राक्ष । सवाष्पम् । विधेर्विलसितमिदं, न चाणक्यस्य । कुतः ?

भृत्यत्वे परिभावधामनि सति स्नेहात् प्रभूणां सतां,
पुत्रेभ्यः कृतवेदिनां कृतधियो येषामभिन्ना वयम् ।
ते लोकस्य परीक्षकाः, क्षितिभृतः, पापेन येन क्षता-
स्तस्येदं विपुलं विधेर्विलसितं, पुंसां प्रयत्नच्छिदः ॥ २० ॥

---

(य) एवमभियुक्तव्याहारिणा इत्येव पाठः समीचीनः । तथाच, अभियुक्तं दोषित्वेन शङ्कितं व्याहरति वदतीति तथोक्तेन दोषी अह-मिति वादिना भवता इत्यर्थः निर्णयः निर्णायकमुत्तरं दत्तः दातुमुप-दिष्टः । तथाच, मौर्य्योऽसाविति स्लोके युष्मदस्मदोः शब्दयोः व्यत्ययेन वैपरीत्येन । तद्यथा—

मौर्य्योऽसौ स्वामिपुत्रः परिचरणपरो मित्रपुत्रो मम त्वं
दाता सोऽर्थस्य मह्यं स्वमतमनुगतोऽहन्तु तुभ्यं ददामि ।
दास्यं सत्कारपूर्वं ननु सचिवपदं तत्र मे स्वास्थमत्र
स्वार्थे कस्मिन् समीहा पुनरधिकतरे मामनार्य्यं करोति ॥

(२०) भृत्यत्वे इति । परिभावधामनि तिरस्काराश्रये भृत्यत्वे दासत्वे सत्यपि कृतधियः कृतबुद्धयः कृतोपकारस्मर्त्तारः वयं कृतवेदिनां कृतज्ञानां सतां साधुशीलानां येषां प्रभूणां नन्दानामिति शेषः स्नेहात् पुत्रेभ्यः अभिन्नाः पुत्रनिर्विशेषा आस्म इति शेषः, लोकस्य परीक्षकाः सदसद्विवेकिनः ते क्षितिभृतः राजानः येन पापेन विधिना क्षताः ध्वंसं

मल। सक्रोधम्। कथमद्यापि निह्नूयते विधेर्विलसित-मिदं, न ममेति। अनार्य्य !

कन्यां तीव्रविषप्रयोगविषमां कृत्वा, कृतघ्न ! त्वया
विस्रब्धप्रवणस्तदा मम पिता नीतः कथाशेषताम्।
सम्प्रत्याहितगौरवेण भवता मन्त्राधिकारे रिपोः
प्रारब्धाः प्रणयाय मांसवदहो विक्रेतुमेते वयम्॥ २१॥

राक्ष। स्वगतम्। अयमपरो गण्डस्योपरि विस्फोटः। प्रकाशम्। कर्णौ पिधाय। शान्तं पापं, शान्तं पापम्। नाहं विषकन्यामारोपितवानपापोऽहं पर्वतेश्वरे।

मल। केन तर्हि व्यापादितस्तातः ?

राक्ष। दैवमत्र प्रष्टव्यम्।

मल। सक्रोधम्। दैवमत्र प्रष्टव्यं, न क्षपणको जीव-सिद्धिः ?

---

नीताः, इदं विपुलं समस्तं पुंसां प्रयत्नच्छिदः पुरुषकारघातिनः तस्य विधेः दैवस्य विलसितं चेष्टितम्। शार्दूलविक्रीड़ितं वृत्तम्।

(२१) कन्यामिति। रे कृतघ्न ! कृतोपकारविस्मारिन् ! त्वया तीव्रविषप्रयोगविषमां तीव्रः तीक्ष्णः विषस्य प्रयोगो यया सा अत एव विषमा घोरा तां कन्यां कृत्वा प्रयुज्य तदा विस्रब्धप्रवणः त्वयि सुविश्वस्तः मम पिता पर्वतेश्वरः कथाशेषतां नीतः निहत इत्यर्थः, सम्प्रति भवता रिपोः चन्द्रगुप्तस्य मन्त्राधिकारे सचिवपदे आहितगौरवेण प्राप्तसम्मानेन सता प्रणयाय तत्प्रीत्यर्थमित्यर्थः एते वयं मांसवत् विक्रेतुं प्रारब्धाः, अहो इत्याश्चर्य्ये किमाश्चर्य्यमिदमित्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्।

राक्ष। स्वगतम्। कथं जीवसिद्धिरपि चाणक्यप्रणिधिः। हन्त! हृदयमपि मे रिपुभिः स्वीकृतम्।

मल। सक्रोधम्। आज्ञाप्यतां शिखरसेनः सेनापतिः, ये एतेन राक्षसेन सह सौहार्दमुत्पाद्यास्मच्छरीराभिद्रोहेण चन्द्रगुप्तमाराधयितुकामाः पञ्च राजानः। तद्यथा, कौलूतश्चित्रवर्म्मा, मलयनरपतिः सिंहनादः, काश्मीरः पुष्कराक्षः, सिन्धुराजः सुषेणः, पारसीकाधिराजो मेघाख्य(श्च) इति। तत्र तेषां मध्ये, ये त्रयः प्रधानतमाः प्रथमा मदीयां भूमिं कामयन्ते, ते गम्भीरश्वभ्रमुपनीय (र) पांशुभिः पूर्य्यन्ताम्। इतरौ तु द्वौ हस्तिबलकामौ हस्तिनैव घात्येतामिति।

पुरुष। जं कुमारो आणवेदि त्ति (६७)। निष्क्रान्तः।

मल। सक्रोधम्। राक्षस! राक्षस! नाहं विस्रम्भघाती राक्षसो, मलयकेतुः खल्वहं, तद् गच्छ, समाश्रीयतां सर्वात्मना चन्द्रगुप्त इति।

विष्णुगुप्तञ्च मौर्य्यञ्च समम्प्यागतौ त्वया।
उन्मूलयितुमीशोऽहं त्रिवर्गमिव दुर्नयः॥ २२॥

---

(६७) यत् कुमार आज्ञापयतीति।

---

(र) गम्भीरश्वभ्रं गभीरगर्त्तम्।

(२२) विष्णुगुप्तमिति। दुर्नयः दुर्नीतिः असदाचरणमित्यर्थः त्रिवर्गं त्रयाणां धर्मार्थकामानां वर्गः समुदायः तमिव अहं त्वया समं सह आगतौ विष्णुगुप्तं चाणक्यं मौर्य्यं चन्द्रगुप्तञ्च उन्मूलयितुं नाशयितुम् ईशः समर्थः। अनुष्टुप् वृत्तम्।

भाग । कुमार ! कृतं कालहरणेन । शीघ्रमेव कुसुमपुरोपरोधाय प्रतिष्ठन्तामस्मद्बलानि ।

गौड़ीनां लोध्रधूलीपरिमलधवलान् धूम्रयन्तः कपोलान्
क्लिश्नन्तः कृष्णिमानं भ्रमरकुलरुचः कुञ्चितस्यालकस्य ।
पांशुव्यूहा बलानां तुरगखुरपुटक्षोदलब्धात्मलाभाः
शत्रूणामुत्तमाङ्गे गजमदसलिलच्छिन्नमूलाः पतन्तु ॥ २३ ॥

इति सपरिजनो निर्गतो मलयकेतुः ।

राक्ष । सावेगम् । हा धिक् कष्टम् । तेऽपि हतास्तपस्विनश्चित्रवर्म्मादयः, तत् कथं सुहृन्नाशाय राक्षसश्चेष्टते न रिपुविनाशाय, तत् किमिदानीं करवाणि मन्दभाग्यः ।

किं गच्छामि तपोवनं, न तपसा शाम्येत् सवैरं मनः,
किं भर्तृ ननुयामि जीवति रिपौ, स्त्रीणामियं योग्यता ।

---

(२३) गौड़ीनामिति । बलानाम् अस्मत्सैन्यानां तुरगखुरपुटक्षोदलब्धात्मलाभाः तुरगाणाम् अश्वानां खुरपुटैः खुराग्रैः यः क्षोदः चूर्णनं तेन लब्धः प्राप्तः आत्मलाभः स्वोत्पत्तिः यैः तादृशाः पांशुव्यूहाः रजःसङ्घाः गौड़ीनां गौड़देशनिवासिनीनां नारीणां लोध्रधूलीपरिमलधवलान् लोध्रस्य वृक्षविशेषपुष्पस्य धूली परागः एव परिमलः सुगन्धिद्रव्यभेदः तेन धवलान् कपोलान् धूम्रयन्तः धूम्रवर्णान् कुर्वन्तः तासामेव भ्रमरकुलरुचः कृष्णवर्णस्य कुञ्चितस्य भङ्गिमतः अलकस्य चूर्णकुन्तलस्य कृष्णिमानं कृष्णत्वं क्लिश्नन्तः अपनयन्तः तथा गजमदसलिलच्छिन्नमूलाः गजानां मदाः एव सलिलानि तैः छिन्नं मूलं येषां तादृशाः सन्तः शत्रूणाम् उत्तमाङ्गे शिरसि पतन्तु । स्रग्धरावृत्तम् ।

किंवा खड्गसखः पताम्यरिबले, नेदं न युक्तं भवेत्,
चेतश्चन्दनदासमोक्षरभसं रुन्ध्यात् कृतघ्नं न चेत् ॥ २४ ॥

इति निष्क्रान्ताः सर्वे ।

पञ्चमोऽङ्कः ।

---

# अथ षष्ठोऽङ्कः ।

ततः प्रविशत्यलङ्कृतः सहर्षः सिद्धार्थकः ।

सिद्ध । जअदि जलदणीलो केसवो केसिघादी
जअदि सुजणदिट्ठीचन्दमा चन्दउत्तो ।
जअदि जअणसज्जं जा अकाऊण सेण्णं,
पडिहदपडिवक्खा अज्जचाणक्कणीदी ॥ १ ॥

---

(१) जयति जलदनीलः केशवः केशिघाती
जयति सुजनदृष्टिचन्द्रमाश्चन्द्रगुप्तः ।
जयति जयसज्जं या कृत्वा च सैन्यं
प्रतिहतप्रतिपक्षा आर्यचाणक्यनीतिः ॥

---

(२४) किं गच्छामीति । किं तपोवनं गच्छामि, न युक्तं तदित्याह नेति । सवैरं मनः तपसा न शाम्येत् न शान्तिं गच्छेत् । रिपौ शत्रौ जीवति विद्यमाने किं भर्त्तृन् स्वामिनः अनुयामि, इयं स्त्रीणां योग्यता अध्यवसायः, न पुरुषाणाम् । किंवा अथवा खड्गसखः असिमात्रसहायः सन् अरिबले शत्रुबले पतामि ? इदं शत्रुसैन्यमध्ये पतनं युक्तं न भवेत् इति न अपितु युक्तमेव भवेत्, चेत् यदि चन्दनदासमोक्षरभसं चन्दनदासस्य मोक्षे बन्धनागाराद् विमोचने रभसं सवेगं व्यग्रमित्यर्थः अत एव कृतघ्नं स्वामिकृतोपकारविस्मारकं मे चेतः न मां रुन्ध्यात् । शार्दूलविक्रीडितं वृत्तम् ।

जाव चिरस्स कालस्स पिअवअस्सं समि(सुसि)द्धत्थअं पेक्खामि। परिक्रम्यावलोक्य च। अअं उण पिअवअस्सओ समि(सुसि)द्धत्थओ इदो ज्जेव आअच्छदि। ता जाव उवसप्पामि (१)।

ततः प्रविशति समि(सुमि)द्धार्थकः।

सुसिद्धा।

सन्तावेन्ता आवाणेसु, महूसवेसु रुआवेन्ता।
हिअअच्छिआ विअ विहवा, बिरहे मित्ताणं दुम्मणाअन्ते॥२॥

सुदञ्च मए जधा मलअकेदुकडआदो पिअवअस्सओ सिद्धत्थओ आअदो त्ति। ता जाव णं अण्णेसामि। परिक्रम्योपसृत्य च। एसो सिद्धत्थओ। अवि सुहं पिअवअस्सस्स ? (२)।

सिद्धा। विलोक्य। कधं इदो ज्जेव पिअवअस्सओ सुसिद्धत्थओ। उपगम्य। अवि सुहं पिअवअस्सस्स ? (३)।

---

यावत् चिरस्य कालस्य प्रियवयस्यं समि(सुमि)द्धार्थकं पश्यामि। अयं पुनः प्रियवयस्यः सुसिद्धार्थकः इत एवागच्छति। तद् यावदुपसर्पामि।

(२) सन्तापयन्तः आपानेषु, महोत्सवेषु रुजायन्तः।
हृदयस्थिता अपि विभवा, विरहे मित्राणां दुर्मनायन्ते॥

श्रुतञ्च मया यथा मलयकेतुकटकात् प्रियवयस्यः सिद्धार्थक आगत इति। तद् यावदेनमन्वेषयामि। एष सिद्धार्थकः। अपि सुखं प्रियवयस्यस्य ?

(३) कथमित एव प्रियवयस्यः सुसिद्धार्थकः। अपि सुखं प्रियवयस्यस्य ?

---

(२) विभवे सम्पदि अपि सत्यपीत्यर्थः हृदयस्थिता मित्राणां विरहाः विच्छेदाः आपानेषु पानगोष्ठीषु सन्तापयन्तः, तथा महोत्सवेषु रुजायन्तः पीडयन्तः अत एव दुर्मनायन्ते दुर्मनसः दुःखितमनसः कुर्वन्ति।

उभावन्योन्यमालिङ्गतः ।

सुसिद्धा । अह वअस्स ! कुदो मे सुहं, जस्स तुमं चिर-आलप्पवासपच्चागदोवि, अआचिक्खिअ वुत्तन्तं, अस्सदो गदोसि त्ति (४) ।

सिद्धा । पसीददु पसीददु पिअवअस्सो । अहं क्खु दिट्ठमेत्तो ज्जेव अज्जचाणक्केण आणत्तो, जधा, सिद्धत्थअ ! गच्छ, एदं वुत्तन्तं पिअं पिअदंसणस्स देअस्स चन्दसिरिणो णिवेदेहि त्ति । तदो तस्स तं णिवेदिअ, एवं अणुभूद-पात्थिवपसादो, अहं पिअवअस्सं पेक्खिदुं तुह गेहं चलिदोह्मि (५) ।

सुसिद्धा । वअस्स ! जदि मए एदं सुणिदव्वं भोदि, ता मंपि सुणावेहि, किं तं पिअं पिअदंसणस्स चन्दसिरिणो णिवेदिदं त्ति (६) ?

सुसिद्धा । पिअवअस्स ! तवापि किं असुणिदव्वं अत्थि ? ता णिसामेहि । अत्थि दाव, अज्जचाणक्कणीदिमोहिद-

---

(४) अह वयस्य ! कुतो मे सुखं, यस्य त्वं चिरकालप्रवासप्रत्यागतोऽपि, अख्यापयित्वा वृत्तान्तम्, अन्यतो गतोऽसि इति ।

(५) प्रसीदतु प्रसीदतु प्रियवयस्यः । अहं खलु दृष्टमात्र एव आर्यचाणक्येनाज्ञप्तः, यथा सिद्धार्थक ! गच्छ, इमं वृत्तान्तं प्रियं प्रियदर्शनस्य देवस्य चन्द्रश्रियः निवेदयेति । ततस्तस्य तन्निवेद्य, एवमनुभूतपार्थिवप्रसादः, प्रियवयस्यं प्रेक्षितुं तव गेहे चलितोऽस्मि ।

(६) वयस्य ! यदि मयेदं श्रोतव्यं भवति, तन्मामपि श्रावय, किं तत् प्रियं प्रियदर्शनस्य चन्द्रश्रियः निवेदितमिति ।

मदिणा मलअकेदुहदएण णिराकरिअ रक्खसं, हदा चित्तवम्मप्पमुहा प्पहाणा पञ्च पत्थिवा । तदो असमिक्खकारी एसो, दुराआरोत्ति कदुअ, उज्झिअ मलअकेदुकडअभूमिं, णिअभूमिकुसलदाए भअबिलोलसेसतणूकदपरिवारेसु (क), सकं सकं बिसअं अभिप्पत्थिदेसु पत्थिवेसु भट्टभट-पुरुदत्त-हिङ्गुरात-बलउत्त-राअसेण-भागुराअण-रोहिदक्ख-विजअवम्म-प्पमुहेहिं संजमिदो मलअकेदु (७) ।

सुसिद्धा । वअस्स ! भट्टभटप्पमुहा किल देवस्स चन्दसिरिणो अवरत्ता मलअकेदुं समास्सिदा त्ति लोए मन्तो-

---

(७) प्रियवयस्य ! तवापि किमश्रोतव्यमस्ति, तन्निशामय । अस्ति तावत्, आर्यचाणक्यनीतिमोहितमतिना मलयकेतुहतकेन निराकृत्य राक्षसं, हताश्चित्रवर्मप्रमुखाः प्रधानाः पञ्च पार्थिवाः । ततोऽसमीक्ष्यकारी एष, दुराचार इति कृत्वा, उज्झित्वा मलयकेतुकटकभूमिं, निजभूमिकुशलतया भयविलोलसैन्यतनूकृतपरिवारेषु, स्वकं स्वकं विषयमभिप्रस्थितेषु पार्थिवेषु, भद्रभट-पुरुदत्त-हिङ्गुरात-बलगुप्त-राजसेन-भागुरायण-रोहिताक्ष-विजयवर्म-प्रमुखैः संयमितो मलयकेतुः ।

---

(क) मलयकेतुकटकभूमिं शिबिरस्थानम् । निजभूमिकुशलतया निजाधिकारभूमिरक्षणे व्यग्रतया । भयविलोलसैन्यतनूकृतपरिवारेषु भयेन विलोलानि चञ्चलानि सैन्यानि भयविलोलसैन्यानि तैः तनूकृताः स्वल्पीकृताः परिवाराः येषां तेषु भयद्रुताधिकभागेषु इत्यर्थः ।

अदि। ता किं णिमित्तं एदं कुकविणाडअस्स विअ अण्णं मुहे अण्णं णिव्वहणे (ख) त्ति (८)?

सिद्धा। वअस्स! सुणु दाव, देवगदीए विअ असुणिदगदीए णमो अज्जचाणक्कणीदीए (९)।

समिद्धा। वअस्स! तदो तदो (१०)?

सिद्धा। वअस्स! तदो पहुदि, सारसाधणसमुदाएण इदो णिक्कमिअ, अज्जचाणक्केण पडिवण्णं अराअलोअं असेसराअबलं (११) (ग)।

---

(८) वयस्य! भद्रभटप्रमुखाः किल देवस्य चन्द्रश्रियः अपरक्ता मलयकेतुं समाश्रिता इति लोके मन्यते। तत् किं निमित्तमेतत्, कुकविनाटकस्येव अन्यत् मुखे अन्यत् निर्वहणे इति।

(९) वयस्य! शृणु तावत्, देवगत्या इव अश्रुतगत्या नम आर्य्यचाणक्यनीत्याः।

(१०) वयस्य! ततस्ततः?

(११) वयस्य! ततः प्रभृति, सारसाधनसमुदायेन इतो निष्क्रम्य, आर्य्यचाणक्येन प्रतिपन्नमराजलोकमशेषराजबलम्।

---

(ख) मुखे मुखसन्धौ, प्रारम्भे इत्यर्थः। निर्वहणे उपसंहारे। उपक्रमोपसंहारयोः परस्परमेकरूपता नाटके प्रथिता इति, अत्र तु तद्वैपरीत्यं कथमिति प्रश्नार्थः।

(ग) ततः प्रभृतीत्यत्र ततः पश्चादिति पाठः समीचीनतया प्रतिभाति। आर्य्यचाणक्येन इतः अस्मात् नगरात् निष्क्रम्य सारसाधनसमुदायेन उत्कृष्टोत्कृष्टसंग्रामोपकरणसमूहेन सह अराजलोकं राजरहितं राज्ञां स्वस्वविषयेषु प्रस्थितत्वादिति भावः अशेषराजबलं समग्रराजसैन्यं प्रतिपन्नम् अधिकृतम्।

सुसिद्धा । वअस्स ! कहिं (१२) ?

सिद्धा । वअस्स ! जहिं एदे,

अदिसअगरुएणं दाणदप्पेण दन्ती,
सजलजलदलीलामुव्वहन्तो णदन्ति ।
कसपहरभएणं जाअकम्पा तुरन्ता
गहिदजअणसज्जा, संपदन्ते तुरङ्गा (१३) ॥ ३ ॥

सुसिद्धा । वअस्स ! सव्वं दाव चिट्ठदु । तधा सव्वलोअस्स पच्चक्खं उज्झिआहिआरो भविअ, कधं अज्जचाणक्को पुणो वि तं व्वेव मन्तिपदं आरूढो (१४) ?

---

(१२) वयस्य ! कुत्र ?

(१३) यत्रैते,

अतिशयगुरुणा दानदर्पेण दन्तिनः
सजलजलदलीलामुद्वहन्तो नदन्ति ।
कशाप्रहारभयेन जातकम्पास्त्वरयन्तः
गृहीतजयनसज्जाः सम्पद्यन्ते तुरङ्गाः ॥

(१४) वयस्य ! तावत् सर्वं तिष्ठतु। तथा सर्वलोकस्य प्रत्यक्षमुज्झिताधिकारो भूत्वा, कथमार्य्यचाणक्यः पुनरपि तदेव मन्त्रिपदमारूढः ?

---

(३) अतिशयगुरुणेति । दन्तिनः हस्तिनः अतिशयगुरुणा अतिशयेन दानदर्पेण मदजलगर्वेण सजलजलदलीलां सजलानां जलदानां लीलां सादृश्यम् उद्वहन्तः सन्तः नदन्ति बृंहन्ति, तथा गृहीतजयनसज्जाः युद्धार्थं सज्जिताः तुरङ्गाः कशाप्रहारभयेन जातकम्पाः अत एव त्वरयन्तः सम्पद्यन्ते त्वरावन्तः भवन्ति ।

विद्धा । वअस्स ! अदिमुद्धो दाणीं सि तुमं । जो अमच्च-रक्खसेण अणवगाहिदपुव्वं अज्जचाणक्कबुद्धिं अवगाहिदु-मिच्छसि (१५) ।

सुविद्धा। वअस्स! अध अमच्चरक्खसो दाणीं कहिं (१६)?

विद्धा । वअस्स ! सो क्खु तस्सिं पलअकोलाहले वड्ढ-माणे, मलअकेदुकडआदो णिक्कमिअ, उन्दुरणामधेएण चरेण अनुसरन्तो इमं ज्जेव कुसुमउरं आगदो त्ति अज्ज-चाणक्कस्स णिवेदिदं (१७) ।

सुविद्धा । वअस्स ! तधा णाम अमच्चरक्खसो णन्दरज्ज-पच्चाणअणे किदव्ववसाओ णिक्कमिअ, सम्पदं अकदत्थो पुणो वि कधं इमं ज्जेव कुसुमउरं आअदो (१८) ।

विद्धा । वअस्स ! तक्केमि, चन्दणदासस्स सिणेहेण त्ति (१९) ।

---

(१५) वयस्य ! अतिमूर्खं इदानीमसि त्वम् । यस्त्वममात्यराक्षसेना-नवगाहीतपूर्वामार्यचाणक्यबुद्धिमवगाहितुमिच्छसि ।

(१६) वयस्य ! अथ अमात्यराक्षस इदानीं कुत्र ?

(१७) वयस्य ! स खलु अमात्यराक्षसस्तस्मिन् प्रलयकोलाहले वर्धमाने, मलयकेतुकटकान्निष्क्रम्य, उन्दुरनामधेयेन चरेणानुस्रियमाणः इदमेव कुसुमपुरमागत इत्यार्यचाणक्यस्य निवेदितम् ।

(१८) तथा नामामात्यराक्षसो नन्दराज्यप्रत्यानयने कृतव्यवसायो निष्क्रम्य, साम्प्रतमकृतार्थः पुनरपि कथमिदं कुसुमपुरमागतः ?

(१९) वयस्य ! तर्कयामि, चन्दनदासस्य स्नेहेनेति ।

सुसिद्धा । वअस्स ! सच्चं चन्दणदासस्स सिणेहेण त्ति ? अथ चन्दणदासस्स मोक्खं पेक्खसि (२०) ?

सिद्धा । वअस्स ! कुदो से अधस्सस मोक्खो ? सो क्खु सम्पदं अज्जचाणक्कस्स आणत्तीए दुवेहिं पि अम्हेहिं वज्झट्ठाणं पवेसिअ वावादइदव्वो (२१) ।

सुसिद्धा । सक्रोधम् । वअस्स ! किं अज्जचाणक्कस्स घातअअणो अण्णो णत्थि, जदो अम्हे इदिसे णिसंसे कम्मे णिउज्जीअदि (२२) ?

सिद्धा । वअस्स ! ण जीवलोए णिवसिदुकामो अज्जचाणक्कस्स आणत्तिं पडिऊलेदि । ता एहि, चंडालवेसधारिणो भविअ, चन्दणदासं वज्झट्ठाणं णेह्म (२३) ।

इत्युभौ निष्क्रान्तौ । प्रवेशकः ।

ततः प्रविशति रज्जुहस्तः पुरुषः ।

---

(२०) वयस्य ! सत्यं चन्दनदासस्य स्नेहेनेति ? अथ चन्दनदासस्य मोक्षं प्रेक्षसे ?

(२१) वयस्य ! कुतोऽस्याधन्यस्य मोक्षः ? स खलु साम्प्रतमार्यचाणक्यस्याज्ञया द्वाभ्यामपि आवाभ्यां वध्यस्थानं प्रवेश्य व्यापादयितव्यः ।

(२२) वयस्य ! किमार्यचाणक्यस्य घातकजनोऽन्यो नास्ति, यतोऽस्मानीदृशे नृशंसे कर्मणि नियुङ्क्ते ?

(२३) वयस्य ! न जीवलोके निवस्तुकाम आर्यचाणक्यस्याज्ञां प्रतिकूलयति । तदेहि, चण्डालवेषधारिणौ भूत्वा, चन्दनदासं वध्यस्थानं नयाम ।

पुरु ।

छग्गुणसंजोअदिढा उवाअपरिवाडीघडिदपासमुही ।
चाणक्कणीदिरज्जू रिउसंजमणुज्जुआ जअदि ॥ ४ ॥

एसो सो अज्जचाणक्कस्स उन्दुरएण चरेण कधिदो पदेसो । जहिं मए अज्जचाणक्काणत्तीए अमच्चरक्खसो पेक्खिदव्वो । (विलोक्य।) कधं एसो क्खु अमच्चरक्खसो किदावगुण्ठणो इदो ज्जेव आअच्छदि । ता जाव इमेहिं जिण्णुज्जाणपादवेहिं अन्तरिदसरीरो पेक्खामि, कहिं आसणपरिग्गहं करेदि त्ति (२४) (घ) । परिक्रम्य तथा स्थितः ।

---

(२४) षड्गुणसंयोगदृढा उपायपरिपाटीघटितपाशमुखी ।
चाणक्यनीतिरज्जू रिपुसंयमनक्षमा जयति ॥

एष स आर्यचाणक्यस्य उन्दुरकेण चरेण कथितः प्रदेशः । यत्र मया आर्यचाणक्याज्ञप्त्या अमात्यराक्षसः प्रेक्षितव्यः । कथमेष खल्वमात्यराक्षसः कृतावगुण्ठन इत एवागच्छति । तद् यावदेभिर्जीर्णोद्यानपादपैरपवारितशरीरः प्रेक्षे, कुत्रासनपरिग्रहं करोतीति ।

---

(ग) षड्गुणसंयोगदृढेति । षड्भिः गुणैः सन्ध्यादिभिः "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः" इत्यमरः, संयोगेन सम्यक् योजनेन दृढा तथा उपायानां सामादीनां "सामदानभेददण्डमित्युपायचतुष्टयम्" इत्यमरः, परीपाट्या श्रृङ्खलया घटितं पाशरूपं मुखं यस्याः तादृशी सैव एव रिपूणां शत्रूणां संयमने बन्धने ऋजुका सरला चतुरा इत्यर्थः चाणक्यनीतिरेव रज्जुः जयति सर्वोत्कर्षेण वर्त्तते ।

(घ) अपवारितशरीरः आच्छादितदेहः । प्रेक्षे पश्यामि । आसन- परिग्रहं करोति उपविशतीत्यर्थः ।

ततः प्रविशति यथा निर्दिष्टः रज्जुहस्तो राक्षसः।

राक्ष। सबाष्पम्। कष्टं भोः कष्टम्!

उच्छिन्नाश्रयकातरेव कुलटा गोत्रान्तरं श्रीर्गता,
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः।
आप्तैरप्यनवाप्तपौरुषफलैः कार्य्यस्य धूरुज्झिता,
किं कुर्वन्त्वथवोत्तमाङ्गरहितैर्नागैश्चिरं स्थीयते ॥ ५ ॥

अपिच,

पतिं त्यक्त्वा देवं भुवनपतिमुच्चैरभिजनं
गता छिद्रेण श्रीर्वृषलमविनीतेव वृषली।
स्थिरीभूता चास्मिन् किमिह करवाम स्थिरमपि
प्रयातुं नो येषां विफलयति दैवं द्विषदिव ॥ ६ ॥

---

(५) उच्छिन्नेति। उच्छिन्नः विनष्टः आश्रयः यस्याः सा अत एव कातरा श्रीः राजलक्ष्मीः कुलटा स्वैरिणीव गोत्रान्तरं वंशान्तरं गता प्राप्ता, यद्यपि मौर्य्यस्य नन्दजातत्वेन न तस्य गोत्रान्तरत्वं तथापि तस्य असवर्णाजातत्वेन स्वगोत्रप्रवर्त्तकत्वाभावात् तथोक्तम्। प्रजाश्च त्यक्तानुरागाः मुक्तपूर्वस्वाम्यनुरागाः गतानुगतिकाः गतं पूर्वप्रस्थितम् अनुगच्छन्तीति गतानुगतिकाः गड्डलिकाप्रवाहादिति भावः तां श्रियमेव अनुगताः नन्दानुरागं त्यक्त्वा श्रीरिव मौर्य्यानुरागिण्यः आसन्नित्यर्थः, आप्तैः विश्वस्तैरपि जनैः अनवाप्तपौरुषफलैः अप्राप्तपुरुषकारफलैः सद्भिः कार्य्यस्य स्वस्वाधिकृतस्य इत्यर्थः धूः भारः "धूः स्त्री स्यात् भारचिन्तयोः" इत्यमरः। उज्झिता त्यक्ता अथवा ते किं कुर्वन्तु, उत्तमाङ्गरहितैः अस्मन्मुख्यैः नागैः हस्तिभिः सर्वैर्वा चिरं स्थीयते एव न किमपि कार्य्यं कर्त्तुं शक्यते इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

(६) पतिमिति। श्रीः राजलक्ष्मीः अविनीता दुश्चारिणी वृषली

मया हि,

देवे गते दिवमतद्विधमृत्युयोग्ये
शैलेश्वरं तमधिकृत्य कृतः प्रयत्नः।
तस्मिन् हते तनयमस्य, तथाप्यसिद्धि-
र्दैवं हि नन्दकुलशत्रुरसौ न विप्रः॥ ७॥

अहो! विवेकशून्यता म्लेच्छस्य मलयकेतोः। कुतः?

यो नष्टानपि जीवनाशमधुना शुश्रूषते स्वामिन-
स्तेषां वैरिभिरक्षतः कथमसौ सन्धास्यते राक्षसः।
इत्थं वस्तुविवेकमूढमतिना म्लेच्छेन नालोचितं
दैवेनोपहतस्य बुद्धिरथवा पूर्वं विपर्यस्यति॥ ८॥

---

कुलटेव उच्चैः महान् अभिजनः वंशो यस्य तं महाकुलीनमित्यर्थः भुवनपतिं देवं नन्दं पतिं त्यक्त्वा छिद्रेण छलेन वृषत्वं वृषं जाति नाशयतीति वृषलः तं मौर्यं गता आश्रिता, अस्मिन् मौर्ये स्थिरीभूता च, अह इति खेदसूचकमव्ययम्। वयं किं करवाम, येषाम् अस्माकं प्रयातं प्राप्तुं स्थिरमपि निश्चितमपि कार्यजातमिति शेषः दैवं द्विषदिव द्वेषं कुर्वदिव विफलयति विफलं करोति। शिखरिणी-वृत्तम्।

(७) देवे इति। अतद्विधमृत्युयोग्ये तद्विधस्य तादृशस्य अनार्य-चाणक्यकृतस्य इत्यर्थः मृत्योः मरणस्य योग्यो न भवतीति तादृशे देवे नन्दे दिवं गते, तं शैलेश्वरम् अधिकृत्य आश्रित्य प्रयत्नः वैरसाधन-प्रयासः कृतः, ततः तस्मिन् शैलेश्वरे हते चाणक्येनेति शेषः अस्य पर्वतेश्वरस्य तनयं मलयकेतुम् अधिकृत्य प्रयत्नः कृतः इति शेषः, तथापि असिद्धिः कार्यसिद्धिर्न जाता इत्यर्थः अतः दैवं हि एव नन्द-कुलशत्रुः, विप्रः चाणक्यः न शत्रुरित्यर्थः। वसन्ततिलकं वृत्तम्।

(८) य इति। यो राक्षसः नष्टान् मृतान् अपि स्वामिनः

तदिदानीमपि तावदरातिहस्तगतो वनं गच्छेद्राक्षसो, न चन्द्रगुप्तेन सह सन्धिं कुर्य्यादिति, अथवा काममसत्यसन्ध इति, यशमयशो, न पुनः शत्रुवचनपरिभूतिः (ङ) । (समन्तादवलोक्य सास्रम्।) एतास्तावद् देवस्य पादचङ्क्रमणपरिचयपवित्रीकृतरथ्याः कुसुमपुरोपकण्ठभूमयः ।

इह हि,

शार्ङ्गज्याकृष्टिमुक्तप्रशिथिलकविकाप्रग्रहेणात्र देशे
देवेनाकारि चित्रं प्रजवितुरगं बाणमोक्षश्चलेषु ।
अस्यामुद्यानराजौ स्थितमिह कथितं राजभिस्तैर्विनेत्यं
सम्प्रत्यालोक्यमानाः कुसुमपुरभुवो भूयसा दुःखयन्ति ॥८॥

---

नापि जीवनाशं प्राणान्तपर्य्यन्तं शुश्रूषते, असौ अत्यतः अविनष्टदेहः तेषां स्वामिनां वैरिभिः शत्रुभिः कथं सन्धास्यते न कथमपीत्यर्थः । वस्तुविवेकमूढेन सदसद्विवेकरहितेन म्लेच्छेन मलयकेतुना इत्थं पूर्वोक्तरूपं न आलोचितम्, अथवा दैवेन उपहतस्य जनस्य बुद्धिः पूर्वमेव विपर्य्यस्यति विपरीता भवति, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ।

(ङ) असत्यसन्धः अतथ्यप्रतिज्ञः । शत्रुवचनपरिभूतिः शत्रूणां वचनेन परिभूतिः परिभवः तिरस्कार इत्यर्थः ।

(६) शार्ङ्गज्येति । अत्र देशे देवेन नन्देन शार्ङ्गस्य धनुषः ज्याया मौर्व्या आकृष्टिराकर्षणं तया मुक्तः अत एव प्रशिथिलः अदृढः कविकाप्रग्रहः वल्गाग्रहणं येन तथाभूतेन सता चलेषु चञ्चलेषु लक्ष्येषु शरव्येषु मृगेषु इत्यर्थः प्रजवितुरगं प्रजवितः प्रकृष्टवेगः तुरगः यत्र तत् अत एव चित्रं यथा तथा बाणमोक्षः शरनिक्षेपः अकारि कृतः । वल्गाग्रहणमन्तरेण वेगवदश्वपृष्ठस्थितेन चञ्चललक्ष्ये शरनिक्षेपकरणम्

।

तत् क्व खलु गच्छामि मन्दभाग्यः । विलोक्य । भवतु, दृष्टमेतज्जीर्णोद्यानमत्र प्रविश्य कुतश्चिच्चन्दनदासस्य वृत्तान्तमुपलप्स्ये । परिक्रम्य समन्तम् । अहो ! अलक्षितोपनिपाताः पुरुषाणां समविषमदशाविभागपरिणतयो (च) भवन्ति । कुतः ?

पौरैरङ्गुलिभिर्नवेन्दुवदहं निर्दिश्यमानः, शनै-
र्यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः ।
भूयः सम्प्रति सोऽहमेव नगरे तत्रैव वन्ध्यश्रमो
जीर्णोद्यानकमेष तस्कर इव त्रासाद् विशामि द्रुतम् ॥ १० ॥

आश्चर्यमित्यभिप्रायेण चित्रमिति क्रियाविशेषणम् । अस्याम् उद्यानराजौ उपवनप्रदेशेषु तैः राजभिः सह स्थितम्, इह अस्मिन् प्रदेशे तैः सह कथितम् आलपितम् । सम्प्रति इदानीं तैः नन्देन तत्पार्श्वचरैश्च राजभिर्विना इत्थम् एवंप्रकारेण आलोक्यमानाः दृश्यमानाः कुसुमपुरभुवः भूयसा आधिक्येन दुःखयन्ति दुःखितान् कुर्वन्ति । स्रग्धरावृत्तम् ।

(च) अलक्षितोपनिपाताः अलक्षितः अतर्कितः उपनिपातः आगमः यासां तादृश्यः । समविषमदशाविभागपरिणतयः समाः समभावेन स्थिताः, विषमाः तद्विपरीताः या दशाः अवस्थाः तासां विभागाः तेषां परिणतयः परिपाकाः । पुरुषाणाम् अवस्थाः कदा कीदृश्यः सम्पद्यन्ते इति कैरपि न तर्कितुं शक्यते इत्यर्थः ।

(१०) पौरैरिति । योऽहं पुरा राज्ञां सहस्रैः वृतः अत एव पौरैः पुरवासिभिः नवेन्दुवत् नवोदितः चन्द्र इव अङ्गुलिभिः शनैः निःशब्दं यथा तथा निर्दिश्यमानः सन् राजेव नृपतिरिव पुरात् नगरात् निरगमं निर्गतवानस्मि, सोऽहं सम्प्रति वन्ध्यश्रमः विफलमनोरथः सन् तस्करः चौर इव भूयः पुनः तत्रैव नगरे जीर्णोद्यानकमेव न तु राज-

अथवा, येषां प्रसादादिदमासीत् त एव न सन्ति । नाट्येन प्रविश्य विलोक्य च । अहो ! जीर्णोद्यानस्य नाभिरमणीयता (क) ।

अत हि,

विपर्य्यस्तं सौधं कुलमिव महारम्भरचनं,
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदः ।
फलैर्हीना वृक्षा विगुणविधियोगादिव नया-
स्तृणैश्छन्ना भूमिर्मतिरिव कुनीतैरविदुषः ॥ ११ ॥

अपिचात्र,

क्षताङ्गानां तीक्ष्णैः परशुभिरुदग्रैः क्षितिरुहां
रुजा कूजन्तीनामविरतकपोतोपरुदितैः ।
स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपया
श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः ॥१२॥

---

भवनं नाशात् भयात् द्रुतं कश्चित् पश्येदिति भिया शीघ्रं विशामि । शार्दूलविक्रीडितं वृत्तम् ।

(क) अभिरमणीयता मनोहारित्वम् ।

(११) विपर्य्यस्तमिति । महारम्भरचनं महता आरम्भेण उद्योगेन रचना यस्य तादृशं सौधं सुधाधवलं राजभवनादि कुलमिव विपर्य्यस्तम् अन्यथाभूतं पतितञ्च । सुहृदः नाशेन बन्धुवियोगेन साधोः हृदयमिव सरः शुष्कम् । विगुणविधियोगात् दुर्दैववशात् नयाः नीतिप्रयोगा इव वृक्षाः फलैः हीनाः । कुनीतैः दुष्टनयैः अविदुषः अज्ञस्य जनस्य मतिः बुद्धिरिव भूमिः तृणैः छन्ना । शिखरिणीवृत्तम् ।

(१२) क्षताङ्गानामिति । फणिनः सर्पाः तीक्ष्णैः कठिनैः उदग्रैः धाराग्रैः परशुभिः कुठारैः क्षताङ्गानां छिन्नावयवानां रुजा व्रणपीडया

एते च तपस्विनो वृक्षाः,

अन्तःशरीरपरिशोषमुपाश्रयन्तः,
कीटक्षतिं शुचमिवातिगुरुं वहन्तः।
छायावियोगमलिना व्यसने निमग्ना,
वृक्षाः श्मशानमुपगन्तुमिव प्रवृत्ताः ॥ १२ ॥

तद्यावदस्मिन् विषमदशापरिणामसुलभे भग्नाग्रशिलातले(ज) मुहूर्त्तमुपविशामि। उपविश्याकर्ण्य च। अये! तत् किमय-

---

अविरतकपोतोपरुदितैः अविरतानि कपोतानां पारावतानाम् उपरुदितानि तैः तच्छलेनेत्यर्थः कूजन्तीनाम् अव्यक्तशब्दं कुर्वतीनां चिरपरिचितां शाखानां वृक्षशाखानां परिचितपरिक्लेशकृपया परिचितानां सततसङ्गितयेति भावः, वृक्षाणां परिक्लेशेन या कृपा दया तया हेतुना श्वसन्तः दीर्घनिश्वासं त्यजन्तः सन्तः स्वनिर्मोकच्छेदैः निजकञ्चुकरूपवस्त्रखण्डैः व्रणमिव निवघ्नन्ति आच्छादयन्ति। यथा क्षतस्थाने वस्त्रबन्धनं स्वजनाः कुर्वन्ति, तथा सर्पाः चिरपरिचितवृक्षाणां कृपया कुर्वन्तीवेत्युत्प्रेक्षा। शिखरिणीवृत्तम्।

(१२) अन्तःशरीरेति। वृक्षाः अन्तःशरीरस्य शरीराभ्यन्तरस्य परिशोषं शुष्कताम् उपाश्रयन्तः प्राप्नुवन्तः, अतिगुरुम् अतिमहतीं शुचं शोकमिव कीटक्षतिं कीटैरुपघातं वहन्तः छायावियोगेन निष्पत्रतया छायाराहित्येन मलिनाः अप्रसन्नाः अत एव व्यसने विपदि वैराग्यरूपे इत्यर्थः निमग्नाः कृतवैराग्यावलम्बना इव श्मशानम् उपगन्तुं मरणार्थमिति भावः, प्रवृत्ताः उद्यताः। वसन्ततिलकं वृत्तम्।

(ज) विषमदशापरिणामसुलभे विषमा या दशा दुरवस्था इत्यर्थः तस्याः परिणामः परिणतिः शेषभागः तत्र सुलभे। भग्नाग्रशिलातले भग्नम् अग्रं यस्य तादृशं यत् शिलातलं प्रस्तरखण्डः तस्मिन्।

साकस्मिकः शङ्खपटहविमिश्रो नान्दीनादः श्रूयते । य एषः,

प्रकुर्वन् श्रोतॄणां श्रुतिपथमसारं गुरुतया,

बहुत्वात् प्रासादैः सपदि परिपीतोज्झित इव ।

अहो ! नान्दीवादः पटुपटहशङ्खध्वनिमहान्

दिशां दैर्घ्यं द्रष्टुं प्रसरति सकौतूहल इव ॥ १४ ॥

विचिन्त्य । आं, ज्ञातम्, एष हि मलयकेतुसंयमनकृतं राज-कुलस्य । इत्यर्द्धोक्ते । मौर्य्यकुलस्याधिकपरितोषं पिशु-नयति (ऋ) । सबाष्पम् । कष्टं भोः ! कष्टम् ।

श्रावितोऽस्मि श्रियं शत्रोरभिनीय च दर्शितः ।

अनुभावयितुं मन्ये, यत्नः सम्प्रति मां विना ॥ १५ ॥

---

(१४) प्रकुर्वन्निति । गुरुतया महत्तया श्रोतॄणां श्रुतिपथं श्रवण-विवरम् असारं दुर्बलं पूर्णतया अपरस्याप्रवेश्यमित्यर्थः कुर्वन्, बहुत्वात् बाहुल्यात् प्रासादैः राजभवनादिभिः सपदि झटिति परि-पीतोज्झितः आदौ परिपीतः पश्चात् उज्झितः परित्यक्तः उद्वान्त इव बहुजलपाने तथासम्भवादिति भावः पटुपटहशङ्खध्वनिमहान् पटूनां दृढ़तां पटहानां वाद्यभेदानां शङ्खानाञ्च ध्वनिभिः महान् नान्दी-वादः अभ्युदयार्थाशीर्वचनं सकौतूहलः कौतुकवान् इव दिशां दैर्घ्यं द्रष्टुं प्रसरति समन्तात् गच्छति । शिखरिणीवृत्तम् ।

(ऋ) पिशुनयति सूचयति ।

(१५) श्रावित इति । अत्र मां विनेति पाठः कथमपि न सङ्गच्छते, मामयमिति पाठः समीचीनतया प्रतिभाति । यथाच अहं शत्रोः श्रियं श्रावितः, अभिनीय समीपमानीय च दर्शितः अस्मि दैवेनेति शेषः, सम्प्रति माम् अनुभावयितुं बोधयितुं यत्नु सन्नद्धमिति, शेषः अयं यत्नः दैवस्येति शेषः इति मन्ये सम्भावयामि । अनुष्टुप्वृत्तम् ।

पुरु। आसीणो अअं। ता जाव अज्जचाणक्कस्स आसुत्तिं संपादेमि (२५)। राक्षसमपश्यन्निव तस्यापतो रज्जु पाशेनात्मानमुद्-बध्नाति।

राक्ष। विलोक्य स्वगतम्। अये! कथमयमात्मानमुद्-बध्नाति। नूममहमिव दुःखितस्तपस्वी। भवतु, पृच्छाम्ये-नम्। उपसृत्य, प्रकाशम्। भद्र! भद्र! किमिदमनुष्ठीयते?

पुरु। सबाष्पम्। अज्ज! जं पिअवअस्सविणासदुःखिदो अह्मारिसो मन्दभाओजणो अनुचिट्ठदि (२६)।

राक्ष। स्वगतम्। प्रथममेव तावन्मया ज्ञातं, नूनमहमि-वायमार्त्तस्तपस्वी। भवतु, पृच्छाम्येनम्। प्रकाशम्। भद्र! व्यसनसब्रह्मचारिन्! यदि गुह्यं नातिभारिकं (ज) वा; ततः श्रोतुमिच्छामि, किं ते प्राणपरित्यागकारणम्?

पुरु। निश्वस्य। अज्ज! ण रहस्सं, ण वा अतिगुरुअं, किन्तु ण सक्कोमि पिअवअस्सविणासदुक्खिदहिअओ एत्तिअमेत्तम्मि मरणस्स कालहरणं कादुं (२७)।

---

(२५) आसीनोऽयम्। तद् यावदार्य्यचाणक्यस्य आज्ञप्तिं सम्पा-दयामि।

(२६) आर्य्य! यत् प्रियवयस्यविनाशदुःखितः अस्मादृशो मन्दभाग्यो जनोऽनुतिष्ठति।

(२७) आर्य्य! न रहस्यं, न वा अतिगुरुकं, किन्तु न शक्नोमि प्रियवयस्यविनाशदुःखितहृदय एतावन्मात्रमपि मरणस्य कालहरणं कर्त्तुम्।

---

(ज) व्यसनसब्रह्मचारिन् व्यसनेन विपदा सब्रह्मचारिन् सहा-ध्यायिन् समानव्यसन इत्यर्थः। अतिभारिकम् अतिदुःसहम्।

राज। निःश्वस्यात्मगतम्। कष्टमेतेषु सुहृद्व्यसनेषु परवदुदासीनाः प्रत्यादिश्यामहे(ट) वयमनेन। प्रकाशम्। भद्र! यदि न रहस्यं, नातिगुरु वा, तत् पुनः श्रोतुमिच्छामि, कथ्यतां का गतिर्दुःखस्येति (ठ)।

पुरु। अहो! णिब्बन्धो अज्जस्स, का गदी, एसो णिवेदेमि, अत्थि एत्थ णअरे मणिआरसेट्ठी जिस्णुदासो णाम (२८)।

राक्ष। स्वगतम्। अस्ति जिष्णुदासश्चन्दनदासस्य परं मित्रम्।

पुरु। सो मम पिअवअस्सो (२९)।

राक्ष। सहर्षमात्मगतम्। अये! प्रियवयस्य इत्याह। हन्त! अत्यन्तसन्निकृष्टसम्बन्धः ज्ञास्यति चन्दनदासस्य वृत्तान्तम्।

पुरु। सबाष्पम्। संपदं सो दीणजणदिण्णविहवो जलणं पविसिदुकामो णअरादो णिक्कन्तो। ता अहं पि जाव तस्स पिअवअस्सस्स असुणिदव्वं ण सुणेमि, ताव अत्ताणं उब्बन्धिअ वावादेमि त्ति इमं जिण्णुज्जाणं आअदो (३०)।

---

(२८) अहो! निर्बन्ध आर्यस्य, का गतिः, एष निवेदयामि, अस्त्यत्र नगरे मणिकारश्रेष्ठी जिष्णुदासो नाम।

(२९) स मम प्रियवयस्यः।

(३०) सम्प्रति स दीनजनदत्तविभवो ज्वलनं प्रवेष्टुकामो नगरा-

---

(ट) परवत् परेण तुल्यम् उदासीनाः अकृतप्रतीकारा इत्यर्थः, प्रत्यादिश्यामहे निराक्रियामहे तिरस्क्रियामहे इति यावत्।

(ठ) का गतिः किं कारणम्।

राक्ष। भद्र! अथाग्निप्रवेशे तव सुहृदः को हेतुः ?
किमौषधपथातिगैरुपहतो महाव्याधिभिः— ? *

पुरु। अज्ज! णहि णहि (२१)।

राक्ष। किमग्निविषकल्पया नरपतेर्निरस्तः क्रुधा—? †

पुरु। अज्ज! सन्तं पावं सन्तं पावं। एदं णत्थि, चन्द-उत्तस्स जणवदेसु अणिसंसा पडिवत्ति (ङ) (२२)।

राक्ष। अलभ्यमनुरक्तवान् किमयमन्यनारीजनम्— ? ‡

पुरु। कर्णौ पिधाय। अज्ज! सन्तं पावं सन्तं पावं।

---

निष्क्रान्तः। तद् अहमपि यावत् तस्य प्रियवयस्यस्याश्रोतव्यं न शृणोमि, तावदात्मानमुद्बध्य व्यापादयामीति जीर्णोद्यानमागतः।

(२१) आर्य्य! नहि नहि।

(२२) आर्य्य! शान्तं पापं, शान्तं पापम्। इदं नास्ति चन्द्र-गुप्तस्य जनपदेषु अनृशंसा प्रतिपत्तिः।

---

* किमौषधपथातिगैरिति। औषधपथातिगैः औषधपथं प्रतीकार्य्यतारूपम् अतिगच्छन्ति तादृशैः औषधाप्रतिविधेयैः महाव्याधिभिः महारोगैः उपहतः आक्रान्तः किम्? अप्रतीकार्य्यरोगस्य असह्यतया तदाक्रान्तस्य मरणव्यवसायसम्भवादिति भावः।

† किमिति। अग्निविषकल्पया अग्नितुल्यया विषतुल्यया च नरपतेः राज्ञः क्रुधा कोपेन निरस्तः प्रताड़ितः किम्? गुरुतरराज-दण्डभयादपि लोकस्य मरणव्यवसायप्रवृत्तिदर्शनादिति भावः।

(ङ) अनृशंसा अनिष्ठुरा, प्रतिपत्तिः व्यवहारः।

‡ अलभ्यमिति। अयं तव बन्धुः अलभ्यं दुर्लभम् अन्यनारी-जनं परकीयां कान्ताम् अनुरक्तवान् किम्? यदासक्तमनसस्तदप्राप्तौ वैराग्येणापि मरणप्रवृत्तिसम्भवादिति भावः।

अभूमि क्खु एस विणअणिधाणस्स सेट्‌ठिजणस्स, विसेसदो जिसुदासस्स (३३)।

पुरु। अज्ज! अध इं (३४) ?

राज। सावेगमात्मगतम्। चन्दनदासोऽस्य सुहृदः प्रिय-सुहृत्तमः, तस्य प्रियसुहृद्विनाश एवाग्निप्रवेशहेतुरिति, यत् समाकुलित एवास्मि सुहृत्स्नेहपक्षपातिना हृदयेन। प्रकाशम्। भद्र! तस्यापि तव सुहृदः सुचरितं विस्तरेण श्रोतुमिच्छामि।

पुरु। अज्ज! अदो अवरं ण सक्कुणोमि मन्दभाओ मरणस्स विग्घमुप्पादेदुं (३५)।

राज। श्रवणीयां कथां कथयतु भद्रमुखः।

पुरु। का गदी। एसो क्खु णिवेदेमि, णिसामेदु अज्जो (३६)।

राज। भद्र! दत्तावधानोऽस्मि।

पुरु। अत्थि, जाणादि अज्जो, एत्थ णअरे मणिआर-सेट्ठी चन्दनदासो णाम (३७)।

---

(३३) आर्य! शान्तं पापं, शान्तं पापम्। अभूमिः खल्वेष विनयनिधानस्य वणिग्जनस्य, विशेषतो जिष्णुदासस्य।

(३४) आर्य! अथ किम्?

(३५) आर्य! अतोऽपरं न शक्नोमि मन्दभाग्यो मरणस्य विघ्नमुत्पादयितुम्।

(३६) का गतिः। एष खलु निवेदयामि, निशामयतु आर्यः।

(३७) अस्ति, जानात्यार्यः, इह नगरे मणिकारश्रेष्ठी चन्दनदासो नाम।

राक्ष। सविषादमात्मगतम्। एतत् तदपावृतमस्मद्विनाशद्वारं दैवेन। हृदय! स्थिरीभव। किमपि ते कष्टतरमाकर्णनीयम्। प्रकाशम्। भद्र! श्रूयते शिववत्सलः स साधुः। किं तस्य?

पुरु। सो अ तस्स जिस्णुदासस्स पिअवअस्सो होदि (३८)

राक्ष। स्वगतम्। अयमत्यन्तः शोकवज्रपातो हृदयस्य। प्रकाशम्। ततस्ततः?

पुरु। तदो जिस्णुदासेण पिअवअस्सस्स सिणेहसरिसं अज्ज विसज्जो चन्दउत्तो (३९)।

राक्ष। कथय किमिति?

पुरु। देव! अत्थि मे गेहे कुटुम्बभरणपज्जत्तो अत्थो। तस्स विणिमयेण मुच्चदु मे पिअवअस्सो चन्दणदासो त्ति (४०)।

राक्ष। स्वगतम्। साधु जिष्णुदास! साधु। अहो! दर्शितो मित्रस्नेहः। कुतः?

पितृन् पुत्राः पुत्रान् परवदभिसन्धाय पितरो,
यदर्थं सौहार्दं, सुहृदि च समुज्झन्ति सुहृदः।

---

(३८) स च तस्य जिष्णुदासस्य प्रियवयस्यो भवति।

(३९) ततो जिष्णुदासेन प्रियवयस्यस्य स्नेहसदृशमद्य विसृष्टश्चन्द्रगुप्तः।

(४०) अस्ति मे गेहे कुटुम्बभरणपर्य्याप्तोऽर्थः। तस्य विनिमयेन मुच्यतां मे प्रियवयस्यश्चन्दनदास इति।

प्रियं सद्यस्त्यक्तुं व्यसनिनि वयस्ये व्यवसितः

कृतार्थोऽयं सोऽर्थस्तव सति वणिक्त्वेऽपि वणिजः ॥१६॥

प्रकाशम्। भद्र! ततस्तथाभिहितेन सता किं प्रतिपन्नं श्रेष्ठिना?

पुरु। अज्ज! तदो एवं भणिदेण चन्दउत्तेण पडिभणिदो जिण्णुदासो। जिण्णुदास! ण मए अत्थस्स कालणेण सेट्ठी संजमिदो चन्दनदासो, किन्तु पच्छादिदो अणेण अमच्चरक्खसस्स घरअणो, बहुसो जाचिदेणावि ण समप्पिदो त्ति। ता जइ अमच्चरक्खसस्स घरअणं समप्पेदि, तदो अत्थि से मोक्खो। अण्णधा, पाणहरो से दण्डो अम्हकोपं पडिमाजेदुत्ति। अण्णोवि जणो एवं ण करइस्सदि त्ति भणिअ, वज्झट्ठाणं आणीदो। तदो जाव पिअवअस्सस्स चन्दणदासस्स असुणिदव्वं ण सुणेमि, ताव ज्जेव अत्ताणअं बावादेमि त्ति, जलणे पविसिदुकामो सेट्ठी जिण्णुदासो णअरादो णिग्गदो। अहं वि जाव पिअवअस्सस्स जिण्णुदासस्स असु-

(१६) त्यजन्तीति। यदर्थं यस्मै इदं यदर्थं यन्निमित्तमित्यर्थः क्रियाविशेषणमिदं पुत्राः पितॄन्, पितरः पुत्रान्, सुहृदश्च सुहृदि परवत् परेष्विव वधम् अभिसन्धाय प्रतार्य सौहार्दं स्नेहं समुज्झन्ति त्यजन्ति। वयस्ये प्रियसुहृदि व्यसनिनि विपन्ने सति त्वं प्रियमपि स्वम् अर्थं स्वदाः असुहृदा त्यक्तुं व्यवसितः उद्यतः। अतः वणिजः नय वणिक्त्वेऽपि वणिग्जनस्य अर्थममतायाः दुष्परिहार्यत्वादिति भावः, सः अयम् अर्थः तार्थः सफल इत्यर्थः। शिखरिणीवृत्तम्।

णिद्दव्वं ण सुणेमि, ताव उब्बन्धिय अत्ताणअं बावादेमि त्ति, इमं जिण्णुज्जाणं आगदोह्मि (४१)।

राक्ष। न खलु व्यापादितश्चन्दनदासः।

पुरु। अज्ज! ण दाव वावादीअदि। सो क्खु संपदं पुणो पुणो अमच्चरक्खसस्स घरजणं जाचीअदि। ण सो मित्त-वच्छलदाए जाचीअन्तोवि तं समप्पेदि। ता एदिणा काल-णेण होदि से मरणस्स कालहरणं (४२)।

राक्ष। सहर्षमात्मगतम्। साधु वयस्य! चन्दनदास! साधु साधु।

---

(४१) आर्य्य! तत एवं भणितेन चन्द्रगुप्तेन प्रतिभणितः श्रेष्ठी जिष्णुदासः। जिष्णुदास! न मयार्थस्य कारणेन श्रेष्ठी चन्दनदासः संयमितः, किन्तु प्रच्छादितोऽनेन अमात्यराक्षसस्य गृहजनो बहुशो याचितेनापि न समर्पित इति। तद् यदि अमात्यराक्षसस्य गृहजनं समर्पयति, तदस्ति तस्य मोक्षः। अन्यथा, प्राणहरस्तस्य दण्डोऽस्मत्-कोपं प्रतिमानयतु इति। अन्योऽपि जनो यथा एवं न करिष्यतीति भणित्वा, वध्यस्थानमानीतः। ततो यावदस्य चन्दनदासस्याश्रोतव्यं न शृणोमि, तावदात्मानं व्यापादयामीति, ज्वलने प्रवेष्टुकामः श्रेष्ठी जिष्णुदासो नगरान्निर्गतः। अहमपि यावत् प्रियवयस्यस्याश्रोतव्यं न शृणोमि, तावदात्मानमुद्बध्य व्यापादयामीति, इदं जीर्णोद्यान-मागतोऽस्मि।

(४२) आर्य्य! न तावत् व्यापाद्यते। स खलु साम्प्रतं पुनः पुनः अमात्यराक्षसस्य गृहजनो याच्यते। न स मित्रवत्सलतया याच्यमानोऽपि तं समर्पयति। तदेतेन कारणेन भवति तस्य मरणस्य कालहरणम्।

शिबेरिव समुद्भूतं शरणागतरक्षया।
विक्रीयते त्वया साधो! यशोऽपि सुहृदा विना॥ १७॥

प्रकाशम्। भद्र! भद्र! गच्छ शीघ्रमिदानीं जिष्णुदासं ज्वलनप्रवेशान्निवारय। अहमपि चन्दनदासं मरणान्मोचयामि।

पुरु। अध, केण उण उवाएण अज्जो चन्दणदासं मरणादो मोचेदि (४२)।

राक्ष। खड्गमाकृष्य। नन्वनेन व्यवसायमहासुहृदा (ढ) निस्त्रिंशेन। ननु, पश्य,

निस्त्रिंशोऽयं विगतजलदव्योमसंकाशमूर्त्ति-
र्युद्धश्रद्धापुलकित इव प्राप्तसख्यः करेण।
सत्त्वोत्कर्षात् समरनिकषे दृष्टसारः परैर्मे
मित्रस्नेहाद् विवशमथवा साहसे मां नियुङ्क्ते॥१८॥

---

(४२) अथ, केन पुनरुपायेन आर्य्यः चन्दनदासं मरणान्मोचयति।

---

(१७) शिबेरिति। हे साधो! त्वया सुहृदा मया विनापि शरणागतरक्षया शरणागतस्य मत्परिजनस्य रक्षया आत्मविनाशेनापीति भावः शिबेरिव शिबिराजस्येव समुद्भूतम् उत्पन्नं यशः विक्रीयते उपार्ज्यते। अनुष्टुप्वृत्तम्।

(ढ) व्यवसायमहासुहृदा इत्यत्र व्यसनमहासुहृदा इति पाठः समुच्छते।

(१८) निस्त्रिंश इति। विगतजलदव्योमसङ्काशमूर्त्तिः विगतः जलदः यस्मात् तादृशं मेघावरणशून्यमित्यर्थः यद् व्योम आकाशं तत्सङ्काशा तत्सदृशी मूर्त्तिः यस्य तथोक्तः कृष्णवर्ण इत्यर्थः युद्ध-

पुरु। अज्ज ! एवं सेट्ठिचन्दणदासजीविदं होदि त्ति सुणिदं, विसमदसाविभागपरिणामपड़िदो, ण सक्णोमि निच्चिदपदं, भणिदुं। विलोक्य पादयोर्निपत्य। अध, सुगिहीद-णामधेया अमच्चरक्खसपादा तुम्हे त्ति, ता करेहि मे पसादं संदेहणिसएण (४४)।

राच। भद्र ! सोऽहमनुभूतभर्तृवंशविनाशः सुहृद्वि-नाशहेतुरनार्य्यो गृहीतनामा यथार्थो राचसः।

पुरु। सहर्षं पुनः पादयोर्निपत्य। पसीदध, पसीदध। हीमाणहे ! दिट्टिआ कदत्थोह्मि (४५)।

राच। भद्र ! उत्तिष्ठोत्तिष्ठ, कृतमिदानीं कालहरणेन।

---

(४४) आर्य्य ! एवं श्रेष्ठिचन्दनदासजीवितं भवतीति श्रुतं विषमदशाविभागपरिणामपतितो, न शक्नोमि निश्चितपदं भणितुम्। अथ सुगृहीतनामधेया अमात्यराचसपादा यूयमिति, तत् कुरु मे प्रसादं संशयनिर्णयेन।

(४५) प्रसीदत प्रसीदत। आश्चर्य्यं ! दिष्ट्या कृतार्थोऽस्मि।

---

श्रद्धापुलकित इव युद्धश्रद्धया संग्रामादरेण पुलकितः रोमाञ्चित इव करेण हस्तेन प्राप्तसख्यः सञ्जातस्नेहः करधृत इत्यर्थः, परैः शत्रुभिः मे मम सत्त्वोत्कर्षात् बलातिशयात् समरनिकषे समर एव निकषः परीक्षाप्रस्तरविशेषः तस्मिन् दृष्टः सारः बलं यस्य तादृशः अयं निस्त्रिंशः खड्गः विवशं व्याकुलमपि मां मित्रस्नेहात् मित्रस्य चन्दनदासस्य स्नेहात् साहसे सहसा बलेन कर्त्तव्यकार्य्ये युद्धव्यापारे इत्यर्थः नियुङ्क्ते प्रेरयति। मन्दाक्रान्तावृत्तं "मन्दाक्रान्ताम्बुधिरस-नगैर्मो भनौ तौ गयुग्मम्" इति लक्षणात्।

निवेद्यतां जिष्णुदासाय, यथैष राक्षसश्चन्दनदासं मरणान्मोचयति इति। निस्त्रिंशोऽयमित्यादि पठन्नाकृष्टखड्गः परिक्रामति।

पुरु। पादयोर्निपत्य। पसीदन्तु पसीदन्तु अमच्चरक्खसपादा। अत्थि दाव एत्थ णअरे पढमं चन्दउत्तहदएण अज्जसअडदासस्स बधो आसत्तो। सो अ केणावि बज्झट्ठाणादो अवहरिअ, देसन्तरं अववाहिदो तदो चन्दउत्तहदएण, कीस प्पमादो कदोत्ति अज्जसअडदासबधबच्चणाए समुज्जलिदो रोसग्गो घादअजणबधजलेण निव्वाविदो। तदो पहुदि घातआ जं कं पि गहिदसत्तं अपुव्वं पुरुषं अग्गदो पच्चादो वा पेक्खन्ति। तदो अद्धवधे ज्जेव अत्तणो जीविदं परिरक्खन्तो अप्पमत्ता एदे अवाप्तबज्झट्ठाणं बज्झं वावादेन्ति। ता एवं गहिदसत्तेहिं अमच्चपादेहिं तहिं गच्छन्तेहिं सेट्ठिचन्दणदासस्स बहो तुवराइदो होदि (४६)।

निष्क्रान्तः।

---

(४६) प्रसीदन्तु प्रसीदन्तु अमात्यराक्षसपादाः। अस्ति तावदत्र नगरे प्रथमं चन्द्रगुप्तहतकेनार्यशकटदासस्य बध आज्ञप्तः। स च केनापि बध्यस्थानादपहृत्य देशान्तरमपवाहितः। ततश्चन्द्रगुप्तहतकेन कस्मात् प्रमादः कृतः, इति आर्यशकटदासबधवञ्चनया समुज्ज्वलितो रोषाग्निर्घातकजनबधजलेन निर्वापितः। ततः प्रभृति, घातका यं कञ्चित् गृहीतशस्त्रम् अपूर्वं पुरुषमग्रतः पश्चाद्वा प्रेक्षन्ते। तदा अर्धपथे एवात्मनो जीवितं परिरक्षन्तोऽप्रमत्ता एते अवाप्तबध्यस्थानं बध्यं व्यापादयन्ति। तस्मादेव गृहीतशस्त्रैरमात्यपादैः तत्र गच्छद्भिः श्रेष्ठिचन्दनदासस्य बधस्त्वरायितो भवति।

राक्ष । स्वगतम् । अहो ! दुर्बोधश्चाणक्यवटोर्नीतिमार्गः । कुतः ?

यदि स शकटो नीतः शत्रोर्मतेन ममान्तिकं,
किमिति निहतस्तेन क्रोधात् वधाधिकृतो जनः ?
अथ स कृतकं तादृग्लेखं कथं नु विभावये-
दिति मम मतिस्तर्कारूढ़ा न पश्यति निश्चयम् ॥१९॥

विचिन्त्य । तस्मात्,

नायं निस्त्रिंशकालः, प्रथममिह कृते घातकानां विघाते,
नीतिः कालान्तरेण प्रकटयति फलं किं तया कार्यमत्र ।
औदासीन्यं न युक्तं, प्रियसुहृदि गते मत्कृते चातिघोरां
व्यापत्तिं,त्रातमस्मिन् स्वतनुमहमिमां निष्क्रयं कल्पयामि ॥२०॥

इति निष्क्रान्ताः सर्वे
इति षष्ठोऽङ्कः ।

---

(१९) यदीति । यदि शत्रोः चाणक्यस्य मतेन अभिप्रायेण गूढ़-चारणसिद्धार्थकेन स शकटः बध्यस्थानात् अपवाह्य इति शेषः मम अन्तिकं समीपं नीतः, तदा क्रोधात् तदपसारणप्रमादजनितादिति भावः तेन वधाधिकृतः घातकः जनः किमिति कथं निहतः, स्वाभिप्रायसम्पादनेन घातकस्यापराधाभावादिति भावः । अथ पक्षान्तरे स सिद्धार्थकः तादृक् कृतकं कूटं लेखं कथं विभावयेत् प्रकटयेत् । नु वितर्के ! मम मतिः इति इत्थं तर्कारूढ़ा सती निश्चयं न पश्यति अधुनापि सन्देहदोलामारोहतीत्यर्थः । हरिणीवृत्तम् ।

(२०) नायमिति । अयं निस्त्रिंशकालः निस्त्रिंशस्य तद्व्यापारस्य कालः समयः न, यतः प्रथमं मत्खड्गचालनात् पूर्वं घातकानां कर्त्तरि षष्ठी घातकैरित्यर्थः विघाते चन्दनदासस्येति शेषः बधे कृते

# सप्तमोऽङ्कः ।

ततः प्रविशति चण्डालः ।

चण्डा । ओसलध अज्जा ! ओसलध, अवेध, माणहे !
अवेध, जइ महह
लक्खिदुं णिअप्पाणे, विहवे, कुले, कलत्ते च ।
पलिहलध विसमिव
लाआपत्थं पअत्तेण ॥ १ ॥

(१) अपसरत हे आर्याः ! अपसरत, अपेत, हे मान्याः !
अपेत, यदि मन्यध्वं
रक्षितुं निजप्राणान्, विभवान्, कुलानि, कलत्राणि च ।
परिहरत तस्मात्
विषमिव राजापथ्यं प्रयत्नेन ॥

सति अस्य वैफल्यमिति शेषः । यद्दिच नीतिः खड्गधारणविषया
इत्यर्थः कालान्तरेण फलं प्रकटयति, अत अस्मिन् विषये चन्दनदास-
मोचनरूपे तया नीत्या किं फलं न किमपीत्यर्थः । मत्कृते मम निमित्तं
प्रियसुहृद्भि अतिघोरां व्यापत्तिं विपदं गते सति औदासीन्यञ्च निः-
सम्पर्कतया अवस्थानं न युक्तं नोचितम्, अतः अस्मिन् विषये अहम्
इमां स्वतनुं निजशरीरं निष्क्रयं चन्दनदासस्य मोचनमूल्यं कल्पयामि
ददामीति अस्मिन् विषये ज्ञातं बुद्धं सिद्धान्तितमित्यर्थः । स्रग्धरा-
वृत्तम् ।

अविअ,

होदि पुलिसस्स व्वाही मलणं वा, सेविदे अवत्थम्मि।
लाआपत्थे उण सेविदे सअलं उलं मलदि॥ २॥

ता जइ ण पत्तिआअध, तदा पेक्खध एदं लाआवत्थकालिणं सेट्ठिचन्दणदासं वज्झट्ठाणं आणीआमाणं सपुत्तकलत्तं। आकाशे। अज्जा! किं भणाध? अत्थि किं चन्दणदासस्स मोक्खोवाओ त्ति? कुदो से, अधसस्स मोक्खोवाओ त्ति? एदं उण अत्थि से जइ अमच्चरक्खसस्स घरअणं समप्पेदि। पुनराकाशे। किं भणाध? एसे सलणागदवच्छले अत्तणो जीविदस्स कालणे ण इदिसं अकज्जं कलिस्सदित्ति? अज्जा! जइ एवं तेण हि अवधालेध से असुभगदिं। एत्तिके दाणीं तुह्माणं पडीआले (१)।

ततः प्रविशति द्वितीयचण्डालानुगतो वध्यवेशधारी शूलं स्कन्धेनादाय कुटुम्बिन्या पुत्रेण चानुगम्यमानश्चन्दनदासः।

कुटु। हद्धी हद्धी! अह्मारिसाणं वि कधं णित्तचारित्त-

---

(१)अपिच, भवति पुरुषस्य व्याधिर्मरणं वा सेविते अपथ्येऽपि।
राजापथ्ये पुनः सेविते सकलं कुलं म्रियते॥

तद् यदि न प्रत्येथ, तदा प्रेक्षध्वम् एनं राजापथ्यकारिणं श्रेष्ठिचन्दनदासं वध्यस्थानमानीयमानं सपुत्त्रकलत्रम्। आर्य्याः! किं भणथ? अस्ति किं तस्य चन्दनदासस्य मोक्षोपाय इति? कुतस्तस्याधन्यस्य मोक्षोपायः? इदं पुनरस्ति तस्य, यदि अमात्यराक्षसस्य गृहजनं समर्पयति। किं भणथ? एष शरणागतवत्सल आत्मनो जीवितस्य कारणे न इदृशमकार्य्यं करिष्यतीति? आर्य्याः! यद्येवं तेन हि अवधत्त तस्याशुभगतिम्। एतावानिदानीं युष्माकं प्रतीकारः।

भङ्गभीरूणं चौरजणाणं विअ मरणं पत्तं त्ति। णमो णमो कदन्तस्स। अहवा णिसंसाणं उदासीणेसु इदरेसु (क) वा विसेसो अत्थि ? तधाहि,

मीहुण अमिसाइं मरणभएण तिणेहिं जीवन्ति ।

बाहाणं मुद्धहरिणे हन्तुं को णाम णिव्बन्धो (ख) ॥३॥

समन्तादवलोक्य। भाव ! पिअवअस्स ! जिण्हुदास ! कधं पडिवअणं वि मे ण पडिवज्जसि त्ति। अधवा, दुल्लहा क्खु, ते पुरिसा, जे इमस्सिं काले दिट्‌ठिवधेवि चिट्‌ठन्ति (३)।

चन्द। सवाष्पम्। एदे अज्जपिअवअस्सा अंसुवादमेत्तकिण्ण किदपदीआरा ससरीरेहिं णिव्वत्तमाणा परिवड्ढमाण-सोअदीणवअणा. बाप्फगरुआए दिट्ठीए मं अणुगच्छन्ति(४)

---

(३) हा धिक्, हा धिक् ! अस्मादृशानामपि कथं नित्यचारिम-भङ्गभीरूणां चौरजनानामिव मरणं प्राप्तमिति। नमः नमः कृतान्तस्य। अथवा नृशंसानाम् उदासीनेषु इतरेषु वा विशेषोऽस्ति ? तथाहि,

मुक्त्वा आमिषाणि मरणभयेन तृणैर्जीवन्ति ।

व्याधानां मुग्धहरिणान् हन्तुं, को नाम निर्बन्धः ।

भाव ! प्रियवयस्य ! जिष्णुदास ! कथं प्रतिवचनमपि मे न प्रतिपद्यसे इति। अथवा, दुर्लभाः खलु ते पुरुषाः, ये एतस्मिन् काले दृष्टिपथेऽपि तिष्ठन्ति ।

(४) एतेऽस्मत्प्रियवयस्या अश्रुपातमात्रेण कृतप्रतीकाराः, स्वशरीरै-निवर्त्तमानाः, परिवर्द्धमानशोकदीनवदना, वाष्पगुर्व्या दृष्ट्या मामनुगच्छन्ति

---

(क) अथवा नृशंसानां दुर्जनानाम्। उदासीनेषु निःसम्पर्कतया अवस्थितेषु निरीहेषु इत्यर्थः। इतरेषु दोषिषु इत्यर्थः।

(ख) निर्बन्धः आग्रहः यत्नातिशय इत्यर्थः।

चण्डालौ । परिक्रम्यावलोक्य च । अज्ज ! चन्दणदास ! पच्चागदोसि वज्झट्ठाणं, ता विसज्जेहि घरअणम् (५) ।

चन्द । अज्जे ! कुटुम्बिणि ! णिवत्तस्स तुमं सपुत्ता । वज्झट्ठाणं क्खु एदं, अदो अवरं अभूमि (ग) अनुगच्छिदुम्(६) ।

कुटु । सवाष्पम् । परलोअं पत्थिदो अज्जो, ण उण देसन्तरं, ता अजोग्गो दाणीं एसो कुलजणस्स णिवत्तिदुं (७) ।

चन्द । अज्जे ! सच्चं, मित्तकज्जेण मम विणासो, ण पुरिसदोसेण । ता किं हरिसट्ठाणे वि रोदिसि त्ति(८) ?

कुटु । अज्ज ! जइ एवं ता अणुचिदं दाणीं कुलअणेण णिवत्तिदुं (९) ।

चन्द । अध किं ववसिदं (घ) अज्जाए (१०) ?

---

(५) आर्य ! चन्दनदास ! प्रत्यागतोऽसि वध्यस्थानं, तत् विसर्जय गृहजनम् ।

(६) आर्ये ! कुटुम्बिनि ! निवर्त्तस्व त्वं सपुत्रा । वध्यस्थानं खल्विदम्, अतोऽपरं अभूमिः खलु अनुगन्तुम् ।

(७) परलोकं प्रस्थित आर्यः, न पुनर्देशान्तरं, तदयोग्यमिदानीं एतत् कुलजनस्य निवर्त्तितुम् ।

(८) आर्ये ! सत्यं, मित्रकार्य्येण मम विनाशो, न पुरुषदोषेण । तत् किं हर्षस्थानेऽपि रोदिषि इति ?

(९) आर्य ! यद्येवं तदनुचितम् इदानीं कुलजनेन निवर्त्तितुम् ।

(१०) अथ किं व्यवसितम् आर्य्यया ?

---

(ग) अभूमिः अस्थानम् अयोग्यस्थानमित्यर्थः ।

(घ) किं व्यवसितं किं कर्त्तुमिष्टमित्यर्थः ।

कुटु । सबाष्पम् । भत्तुणो चलणमणुगच्छन्तीए अज्जाणुग्गहो होदु (११) ।

चन्द । अज्जे ! दुव्ववसिदं एदं दे, ता दाणीं अज्जाए असुणिदलोअव्ववहारो कुमारो अणुगेह्णिदव्वो त्ति (१२) ।

कुटु । अणुगेह्णन्तु णं पसण्णाओ भअवदीओ कुलदेवदाओ । जाद ! पुत्तअ ! पणमअ अपच्छिमस्स पिदुणो पाएसुं (१३) ।

पुत्र । पादयोर्निपत्य । ताद ! मए तादविरहिदेण किं अणुचिट्ठिदव्वम् (१४) ?

चन्द । पुत्त ! चाणक्कविरहिदे देसे वसिदव्वम् (१५) ।

चण्डालौ । अज्ज ! चन्दणदास ! णिखादे सूले, ता सज्जो दाणीं होहि (१६) ।

कुटु । अज्जा ! परित्ताअध परित्ताअध (१७) ।

चन्द । भद्दमुह ! मुहुत्तअं चिट्ठ । अइ जीविदवच्छले !

---

(११) भर्त्तुश्चरणमनुगच्छन्त्याः आर्य्यानुग्रहो भवतु ।

(१२) आर्य्ये ! दुर्व्यवसितमिदं ते, तदिदानीमार्य्यया अश्रुतलोकव्यवहारः कुमारोऽनुग्रहीतव्य इति ।

(१३) अनुगृह्णन्तु एनं प्रसन्ना भगवत्यः कुलदेवताः । जात ! पुत्रक ! प्रणम अपश्चिमस्य पितुः पादयोः ।

(१४) तात ! मया तातविरहितेन किमनुष्ठातव्यम् ?

(१५) पुत्र ! चाणक्यविरहिते देशे वस्तव्यम् ।

(१६) आर्य्य ! चन्दनदास ! निखातं शूलं, तत् इदानीं सज्जो भव ।

(१७) आर्याः ! परित्रायध्वं परित्रायध्वम् ।

किं एत्थ आक्कंदसि ? सग्गं गदा क्खु ते देवा णन्दा जे दुक्खिदं इत्थीजणं पइदिणं अणुकम्पन्ति (१८)।

प्रथमचण्डालः। अले वेणुवेत्तआ ! गेह्ण इमं चन्दणदासं। घलअणो सअं ज्जेव गमिस्सदि (१९)।

द्वितीयचण्डालः। अले वज्जलोमआ ! एसे गेह्णामि (२०)।

चन्द। भद्दमुह ! चिट्ठ मुहुत्तअं, जाव पुत्तअं परिस्सआमि। इति पुत्रं परिष्वज्य मूर्ध्नि समाघ्राय। जाद ! पुत्तअ ! अवस्सं भविदव्वे वि विणासे मित्तकज्जं समुव्वहमाणो विणासमणुभवामि (२१)।

पुत्र। ताद ! एदं क्खु भणिदव्वं, किं कुलक्कमो क्खु एसो अह्माणं (२२) ? इति पादयोः पतति।

चण्डा। अले ! गेह्ण वज्जलोमआ ! (२३)।

---

(१८) भद्रमुख ! मुहूर्तं तिष्ठ। अयि जीवितवत्सले ! किमत्र आक्रन्दसि ? स्वर्गं गताः खलु ते देवाः नन्दा, ये दुःखितं स्त्रीजनं प्रतिदिनमनुकम्पन्ते।

(१९) अरे वेणुवेत्रक ! गृहाणेमं चन्दनदासम्। गृहजनः स्वयमेव गमिष्यति।

(२०) अरे वज्रलोमक ! एष गृह्णामि।

(२१) भद्रमुख ! तिष्ठ मुहूर्तं, यावत् पुत्रकं परिष्वजामि। जात ! पुत्रक ! अवश्यं भवितव्येऽपि विनाशे मित्रकार्यं समुद्वहमानो विनाशमनुभवामि।

(२२) तात ! इदं खलु भणितव्यं, किं कुलक्रमः खलु एषोऽस्माकम् ?

(२३) अरे गृहाण वज्रलोमक !

चाण्डालौ गृहीतचन्दनदासमारोपयितुं शूले।

कुटु। अज्जा! परित्ताअध परित्ताअध (२३)।

प्रविश्य अपटीक्षेपेण राक्षसः। भवति! न भेतव्यं भेतव्यम्। भो भोः सेनापते! न खलु व्यापादनीयश्चन्दनदासः। कुतः?

येन स्वामिकुलं रिपोरिव कुलं दृष्टं विनश्यत् पुरा,
मित्राणां व्यसने महोत्सव इव स्वस्थेन येन स्थितम्।
आत्मा यस्य वधाय वः परिभवक्षेत्रीकृतोऽपि, प्रिय-
स्तस्येयं मम मृत्युलोकपदवी वध्यस्रगाबध्यताम्॥ ४॥

चन्द। विलोक्य सवाष्पम्। अमच्च! किं एदं दे ववसिदं (२४)?

राक्ष। त्वदीयस्य सुचरितैकदेशस्यानुकरणं किल।

---

(२३) आर्याः! परित्रायध्वं परित्रायध्वम्।
(२४) अमात्य! किमिदं ते व्यवसितम्?

---

(४) येनेति। येन मया रिपोः शत्रोः कुलमिव विनश्यत् विनाशं गच्छत् स्वामिकुलं स्वामिनः नन्दस्य कुलं पुरा दृष्टं न प्रतिकृतमित्यर्थः, येन च मया मित्राणां बन्धूनां व्यसने विपदि सत्यपि महोत्सवे इव स्वस्थेन प्रकारान्तरेण स्थितं न साहाय्यं कृतमित्यर्थः, यस्य मम आत्मा वः युष्माकं परिभवक्षेत्रीकृतः तिरस्कारपात्रीकृतोऽपि अपमानास्पदमपीत्यर्थः प्रियः न वियुज्यते इत्यर्थः, तस्य मम कण्ठे इति शेषः वधाय मृत्युलोकपदवी यमलोकगमनमार्गरूपा इयं वध्यस्रक् वध्यस्य चिह्नभूता माला आबध्यताम् चन्दनदासं विहाय मां नयेत्यर्थः। शार्दूलविक्रीडितं वृत्तम्।

चन्द । अमच्च ! सव्वं वि मे णिप्फलं । एदं पआसं करन्तेण ण मे पिअं अणुचिट्ठिदं अमच्चेण (२५) ।

राक्ष । सखे ! चन्दनदास ! कृतमुपालम्भेन, स्वार्थप्रधानो हि जीवलोकः । भद्रमुख ! अयमर्थो निवेद्यतां तावद् दुरात्मने चाणक्याय ।

चण्डालौ । अथ किं त्ति (२६) ?

राक्ष । दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता
नीतं येन यशस्विना प्रलघुतामौशीनरीयं यशः ।
बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं विशुद्धात्मना,
पूजार्होऽपि स यत्कृते तव गतो वध्यत्वमेषोऽस्मि सः ॥५॥

---

(२५) अमात्य ! सर्वमपि मे निष्फलम् । इमं प्रयासं कुर्वता न मे प्रियमनुष्ठितम् अमात्येन ।

(२६) अथ किमिति ?

---

(५) दुष्कालेऽपीति । असज्जनरुचौ असज्जनानां दुर्जनानां रुचिः अनुरागः यत्र तादृशे अत एव दुष्कालेऽपि दुष्टकालेऽपि कलौ प्राणैः निजप्राणदानेन परम् अन्यं जनं रक्षता येन यशस्विना कीर्त्तिमता चन्दनदासेन औशीनरीयं शिबिराजगतं यशः प्रलघुतां लघुतां नीतं न्यक्कृतमित्यर्थः, शिबिना सत्ययुगे तथा कृतम् अनेन तु कलियुगे एतादृशं दुष्करं कृतमिति व्यतिरेकालङ्कारः । तथा विशुद्धात्मना निर्दोषस्वभावेन येन चन्दनदासेन सुचरितैः अहिंसादिभिः बुद्धानां चेष्टितं व्यवहारः क्लिष्टं तिरस्कृतं, पूजार्हः सम्मानार्हः अपि स यत्कृते यस्य राक्षसस्य कृते निमित्तं तव वध्यत्वं गतः प्राप्तः, स एषः राक्षसः अस्मि वध्यस्थाने उपस्थित इति शेषः, एष इत्यत्र एत इति पाठे एतः आगत इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ।

प्रथमः । अले वेणुवत्तआ ! तुमं दाव सेट्ठिचन्दणदासं गेह्णिअ, इमस्स मसाणपादवस्स छाआए मुहुत्तअं चिट्ठ, जाव अहं अज्जचाणक्कस्स णिवेदेमि, जधा गहिदो अमच्चलक्खसो त्ति (२७) ।

द्वितीयः । अले वज्जलोमआ ! एवं होदु (२८) ।

इति सपुत्रदारेण चन्दनदासेन सह निष्क्रान्तः ।

प्रथमः । राक्षसेन सह परिक्रम्य । के के एत्थ दुआलिआणं ? णिवेदेध दाव, णन्दकुलसेस्ससव्वअचूसणकुलिसस्स मौलिअकुलपदिट्ठाविदधम्मसच्चअस्स अज्जचाणक्कस्स (२९) ।

राक्ष । स्वगतम् । एतदपि नाम राक्षसेन श्रोतव्यम् ।

चण्डा । एसो क्खु अज्जणीदिणिअमसंजमिदबुद्धिपुलिसआले गहिदे अमच्चरक्खसे त्ति (३०) ।

ततः प्रविशति जवनिकावृतशरीरो मुखमात्रदृश्यः सहर्षश्चाणक्यः ।

चाण । भद्र ! कथय, कथय ।

---

(२७) अरे वेणुवेत्रक ! त्वं तावत् श्रेष्ठिचन्दनदासं गृहीत्वा, अस्य श्मशानपादपस्य छायायां मुहूर्तं तिष्ठ; यावदहम् आर्यचाणक्यस्य निवेदयामि, यथा गृहीतोऽमात्यराक्षस इति ।

(२८) अरे वज्रलोमक ! एवं भवतु ।

(२९) के केऽत्र दौवारिकाणाम् ? निवेदयत तावत्, नन्दकुलसैन्यसञ्चयचूर्णनकुलिशस्य मौर्यकुलप्रतिष्ठापितधर्मसञ्चयस्य आर्यचाणक्यस्य ।

(३०) एष खलु आर्यनीतिनियमसंयमितबुद्धिपुरुषकारो गृहीतोऽमात्यराक्षस इति ।

केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्ते शिखी ?
पाशैः केन सदागतेरगतिता सद्यः समासादिता ?।
केनानेकपदानवासितसटः सिंहोऽर्पितः पञ्जरे ?
भीमः केन चलैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः ? ॥ ६ ॥

चण्ड। णं णीदिणिउणबुद्धिणा अज्जेण ज्जेव (२१)।

चाण। भद्र ! मा मैवम्। नन्दकुलद्वेषिणा दैवेनेति ब्रूहि।

राक्ष। विलोक्य स्वगतम्। अये ! अयं स दुरात्मा, अथवा अयं स महात्मा कौटिल्यः। यतः,

(२१) ननु नीतिनिपुणबुद्धिना आर्य्येणैव।

(६) केनेति। उत्तुङ्गशिखाकलापकपिलः उत्तुङ्गानाम् उन्नतानां शिखानां कलापेन संहत्या कपिलः पिङ्गलः समुद्दीपित इत्यर्थः शिखी अग्निः पटान्ते वसनप्रान्ते केन जनेन धृतः बद्धः ? सदागतेः सततगमनशीलस्य पवनस्य अगतिता गतिशून्यता गतिरोधः सद्यः सहसा पाशैः रज्जुभिः केन समासादिता कृता इत्यर्थः ? अनेकपदानवासितसटः अनेकपानां द्विपानां दानेन मदसलिलेन वासिता सुरभीकृता सटा जटा यस्य तादृशः "सटा जटा केशरयोः" इत्यमरः, मत्तकरीन्द्रघाती सिंहः केन जनेन पञ्जरे अर्पितः बद्धः ? चलैकनक्रमकरः चलाश्चञ्चलाः एके महान्तः नक्राः मकराश्च यत्र तथाभूतः अत एव भीमः भयङ्करः अर्णवः समुद्रः केन जनेन दोर्भ्यां भुजाभ्यां प्रतीर्णः ? अतिदृप्तस्य राक्षसस्य संयमनं पटाञ्चलेन वह्निबन्धनमिव रज्ज्वा वायुगतिरोधनमिव पञ्जरे मत्तहस्तिघातिसिंहबन्धनमिव तथा बाहुभ्यां दुष्पारसमुद्रोत्तरणमिव दुष्करमिति समुदायार्थः। शार्दूलविक्रीडितं वृत्तम्।

आकरः सर्व्वशास्त्राणां, रत्नानामिव सागरः।
गुणैर्न परितुष्यामो, यस्य मत्सरिणो वयम्॥ ७॥

चाण। निर्वर्ण्य सहर्षम्। अये! अयममात्यराक्षसः। येन महात्मना

गुरुभिः कल्पनाक्लेशैर्दीर्घजागरहेतुभिः।
चिरमायासिता सेना वृषलस्य, मतिश्च मे॥ ८॥

जवनिकामपनीयोपसृत्य च। भो भो अमात्यराक्षस! विष्णुगुप्तोऽभिवादयति।

राक्ष। स्वगतम्। अमात्य इति लज्जाकरमिदमिदानीं विशेषणपदम्। प्रकाशम्। भो भो विष्णुगुप्त! न मां श्वपाकस्पर्शदूषितं (ङ) स्प्रष्टुमर्हसि।

चाण। अमात्य! राक्षस! नायं श्वपाकः। अयं खलु दृष्टपूर्व्व एव भवता सिद्धार्थकनामा राजपुरुषः। योऽप्यसौ

---

(७) आकर इति। रत्नानां सागर इव सर्वशास्त्राणां आकरः खनिः पारदृश्वेत्यर्थः, मत्सरिणः गुणद्वेषिणः वयं यस्य गुणैः यस्य चाणक्यस्य गुणैः न परितुष्यामः परितोषं लभामहे, अतिगुणवानय-मिति वदाम इत्यर्थः। अनुष्टुप्छन्दः।

(८) गुरुभिरिति। दीर्घजागरहेतुभिः दीर्घजागरः महान् निद्रा-विरामः तस्य हेतुभिः गुरुभिः महद्भिः कल्पनाक्लेशैः एवमिदं करणीयम् एतच्च इत्थं कर्त्तव्यमित्येवंप्रकारैः मानसिकरचनाजनितदुःखैः वृषलस्य सेना मे मम मतिश्च चिरं दीर्घकालं व्याप्य आयासिता क्लेशिता। अनुष्टुप्छन्दः।

(ङ) श्वपाकस्पर्शदूषितं श्वपाकश्चण्डालः तस्य स्पर्शेन दूषितः तम्।

द्वितीयः, सोऽपि समि(सुसि)द्धार्थकनामा राजपुरुष एव। ताभ्यामेव सह सौहार्दमुत्पाद्य, शकटदासोऽपि तपस्वी तं तादृशमजानन्नेव कपटलेखं मयैव लेखितः।

राक्ष। आत्मगतम्। दिष्ट्या शकटदासं प्रति अपनीतो विकल्पः (च)।

चाण। किं बहुना, संक्षेपतः कथयामि।

ये ते भद्रभटादयः स च तथा लेखः, स सिद्धार्थक-
स्तच्चालङ्करणत्रयं, स भवतो मित्रं भदन्तः किल।
जीर्णोद्यानगतः स चार्त्तपुरुषः क्लेशः स च श्रेष्ठिनः,
सर्वोऽसौ मम—। इत्यर्धोक्ते लज्जां नाट्यति।
सर्वोऽसौ वृषलस्य वीर! भवता संयोगमिच्छोर्नयः॥ ९॥

तदेष वृषलस्त्वां द्रष्टुमागच्छति। पश्यैनम्।

राक्ष। स्वगतम्। का गतिः। प्रकाशम्। य एष पश्यामि।

---

(च) विकल्पः संशयः शकटदासेन तथा कृतं न वेत्येवंप्रकारः।

(९) ये ते इति। ये ते चन्द्रगुप्तादपरक्ताः सन्तः मलयकेतु-समाश्रिताः भद्रभटादयः भद्रभट आदिर्येषां ते आदिशब्दात् भागुरायण-डिङ्गुरातादयः बोद्धव्याः, तथा स कृत्रिम इत्यर्थः लेखः, स सिद्धार्थकः, तच्च अलङ्करणत्रयं त्रयः अलङ्काराः, स च भवतः मित्रं सुहृद् भदन्तः बौद्धसन्न्यासी जीवसिद्धिः, जीर्णोद्यानगतः स च आर्त्तपुरुषः बन्धुवियोगदर्शनभयेन उद्बन्धनार्थं व्यवसित इत्यर्थः, श्रेष्ठिनः चन्दन-दासस्य च स क्लेशः वध्यस्थाने वधार्थं नयनजनित इत्यर्थः, हे वीर! असौ तद्रूपः सर्वः व्यापार इत्यर्थः भवता सह संयोगं सम्मेलनं इच्छोः वृषलस्य चन्द्रगुप्तस्यैव नयः नीतिः कर्मेति यावत् भवत्प्राप्त्याशयै-वैव सर्वं [illegible] कृतं चन्द्रगुप्तेनेति भावार्थः। शार्दूलविक्रीडितं वृत्तम्।

ततः प्रविशति सेवकैरनुगम्यमानो राजा ।

राजा । स्वगतम् । विनैव युद्धाद् आर्य्येण पराजितं दुर्जयं रिपुकुलमिति, अत् सत्यं लज्जित इवास्मि । मम

फलयोगमवाप्य सायकानामनियोगेन विलक्षतां गतानाम् ।
स्वतूणेव भवत्यधोमुखानां निजतूणीशयनव्रतप्रतिष्ठा ॥ १० ॥

अथवा,

विगुणीकृतकार्मुकोऽपि जेतुं
भुवि जेतव्यमसौ समर्थ एव ।
स्वपतोऽपि ममेव यस्य तन्त्रे
गुरवो जाग्रति कार्य्यजागरूकाः ॥ ११ ॥

---

(१०) फलयोगमिति । अनियोगेन स्वकार्ये शत्रुवधादौ नियोगा-
भावेन विलक्षतां शरव्यशून्यतां विलक्षतां च गतानां प्राप्तानाम् अत एव
स्वतूणेव निजशोकेनेव अधोमुखानाम् अवनतास्यभावेन स्थितानां साय-
कानां बाणानां फलयोगं फलेन लौहमयाग्रभागेन पुङ्खादिरूपेण च
योगं सम्बन्धमुत्सृज्य वाप्य प्राप्यापि निजतूणीशयनव्रतप्रतिष्ठा निजतूणयां
निजाधारे शरधौ यत् शयनं तदेव व्रतं तस्य प्रतिष्ठा समाप्तिर्भवति,
यथा व्रतसमाप्तौ फलोत्पत्तिर्जायते तथा बाणानामपि रिपुजयरूपफल-
प्राप्तिर्जातेति भावः ।

(११) विगुणीति । स्वपतः निद्रां गतस्य राज्यचिन्तापराङ्मुखस्य
यस्य मम इव तन्त्रे राष्ट्रचिन्तायां "तन्त्रः स्वराष्ट्रचिन्तायाम्" इति कोषः;
गुरवः गुरुजनाः कार्य्यजागरूकाः कार्य्येषु जागरूकाः अवहिताः सन्तः
जाग्रति वर्तन्ते इत्यर्थः, असौ नृपः विगुणीकृतकार्मुकः मौर्वीशून्यधनुष्कः
अधनुर्धरोऽपीत्यर्थः भुवि पृथिव्यां जेतव्यम् अरिम् जेतुं समर्थ एव ।
उपेन्द्रवज्राद्वृतम् "उपेन्द्रवज्रा प्रथमे लघौ सा" इति लक्षणात् ।

चाणक्यमुपसृत्य । आर्य्य ! चन्द्रगुप्तः प्रणमति ।

चाण । वृषल ! सम्पन्नास्ते सर्वाशिषः । तदभिवादयस्व तत्रभवन्तम् अमात्यराक्षसम् । पैतृकस्तवायममात्यमुख्यः ।

राक्ष । स्वगतम् । योजितोऽनेन सम्बन्धः ।

राजा । राक्षसमुपसृत्य । आर्य्य ! चन्द्रगुप्तोऽहमभिवादये ।

राक्ष । विलोक्य स्वगतम् । अये ! अयं चन्द्रगुप्तः । य एषः

बाल एव हि लोकेन सम्भावितमहोदयः ।
क्रमेणारूढ़वान् राज्यं, यूथैश्वर्य्यमिव द्विपः ॥ १२ ॥

प्रकाशम् । राजन् ! विजयस्व ।

राजा । आर्य्य !

जगतः किं न विजितं मयेति प्रविचिन्त्यताम् ।
गुरौ षाड़्गुण्यचिन्तायामार्य्ये त्वयि च जाग्रति ॥ १३ ॥

राक्ष । स्वगतम् । स्पृशति मां कौटिल्यशिष्यो भृत्यभावेन,

---

(१२) बाल एवेति । बाल एव शिशुरेव लोकेन सम्भावितमहोदयः सम्भावितः तर्कितः महान् उदयः यस्य तथाभूतः अत एव यूथैश्वर्य्यं यूथपतित्वं द्विपः हस्तिशावक इव क्रमेण राज्यम् आरूढ़वान् प्राप । अनुष्टुप्वृत्तम् ।

(१३) जगत इति । गुरौ चाणक्ये आर्य्ये पैतृकामात्येऽत्रतोव-आन्ये त्वयि च षाड़्गुण्यचिन्तायां षड़्गुणा एव षाड़्गुण्यं सन्धि-विग्रहादिव्यापारः तस्य चिन्तायां कर्त्तव्याकर्त्तव्यत्वभावनायां जाग्रति सतर्काने सति मया जगतः किं न जितम् अपितु सर्वमेव जितम् इति प्रविचिन्त्यताम् अवधार्य्यताम् । अनुष्टुप्वृत्तम् ।

अथवा विनयेनैव । चन्द्रगुप्तस्य मत्सरस्तु मे विपरीतं कल-यति । सर्वथा स्थाने यशस्वी चाणक्यः । कुतः ?

द्रव्यं जिगीषुमधिगम्य जड़ात्मनोऽपि
नेतुर्यशस्विनि पदे नियता प्रतिष्ठा ।
अद्रव्यमेत्य तु विविक्तनयोऽपि मन्त्री
शीर्णाश्रयः पतति कूलजवृक्षवृत्त्या ॥ १४ ॥

चाण । अमात्य ! राक्षस ! अपि दृष्यते चन्दनदासस्य जीवितम् ?

राक्ष । भो विष्णुगुप्त ! कः सन्देहः ?

चाण । अमात्य ! राक्षस ! अगृहीतशस्त्रेण भवता नानुगृह्यते वृषल इत्यतः सन्देहः । तद् यदि सत्यमेव चन्दनदासस्य जीवितमिष्यते, ततो गृह्यतामिदं शस्त्रम् ।

राक्ष । भो विष्णुगुप्त ! मा मैवम् । अयोग्या वयमेतस्य ग्रहणे, विशेषतस्त्वया गृहीतस्य शस्त्रस्य ।

चाण । अमात्य ! राक्षस ! योग्योऽहमयोग्यो भवानिति कथमेतत् ? पश्य,

---

(१४) द्रव्यमिति । द्रव्यं सत्पात्रं जिगीषुं अधिगम्य प्राप्य जड़ात्मनोऽपि अकुशलस्यापि नेतुः नायकस्य उपदेष्टुरित्यर्थः यशस्विनि यशः [illegible]यके पदे प्रतिष्ठा नियता, नियतमेव यशोलाभो भवेदित्यर्थः । मन्त्री विविक्तनयोऽपि विशुद्धनीतिप्रयोगचतुरोऽपि अद्रव्यम् अयोग्य-पात्रं प्रभुमिति शेषः एत्य प्राप्य शीर्णाश्रयः सन् कूलजवृक्षवृत्त्या कूलजस्य तीरजातस्य वृक्षस्य या वृत्तिः वर्त्तनं नियमः तया पतति अचिरकालः खेदातिशयं लभते इत्यर्थः । वसन्ततिलकं वृत्तम् ।

अश्वैः सार्द्धमजस्रदत्तकविकाचामैरशून्यासनान्
स्नानाहारविहारपानशयनस्वेच्छासुखैर्वर्जितान् ।
माहात्म्यादतिपौरुषस्य भवतो दृप्तारिदर्पच्छिदः,
पश्यैतान् परिकल्पनाव्यतिकरप्रोच्छूनवंशान् गजान् ॥१५॥

अथवा किमनेन। न खलु भवतः शस्त्रग्रहणमन्तरेण चन्दनदासस्य जीवितमस्ति ।

राक्ष । स्वगतम् ।

नन्दस्नेहकणाः स्पृशन्ति हृदये, भृत्योऽस्मि तद्विद्विषां,
ये सिक्ताः स्वयमेव पाणिपयसा छेद्यास्त एव द्रुमाः ।
शस्त्रं मित्रशरीररक्षिषु सरुषा व्यापारणीयं, सदा
कार्य्याणां गतयो विधेरपि न यान्त्यालोचनागोचरम् ॥१६॥

---

(१५) अश्वैरिति । दृप्तारिदर्पच्छिदः दृप्तानां गर्वितानाम् अरीणां दर्पं छिनत्तीति तस्य दृप्तशत्रुगर्वापहारिणः अतिपौरुषस्य अतिविक्रान्तस्य भवतः माहात्म्यात् वैभवात् अजस्रदत्तकविकाचामैः अजस्रम् अनवरतं दत्ताभिः योजिताभिः कविकाभिः वल्गाभिः चामैः चीर्णैः अश्वैः सार्द्धम् अशून्यासनान् अशून्यानि आसनानि आरोहियोग्यानि येषां तान् युद्धार्थं सततसज्जितानित्यर्थः, स्नानादिभिः स्वेच्छासुखैः वर्जितान् विरहितान् परिकल्पनाव्यतिकरप्रोच्छूनवंशान् परिकल्पनायाः रणसज्जाविशेषस्य व्यतिकरेण सम्पर्केण प्रोच्छूनाः महान्तः वंशाः पृष्ठस्थदण्डविशेषाः येषां तान् तथाभूतान् गजान् पश्य अवलोकय, भवद्विक्रमप्रभावात् क्षणमपि सेनाङ्गकल्पनाव्यापारेण विश्राम इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(१६) नन्दस्नेहकणा इति । नन्दस्नेहकणाः हृदये स्पृशन्ति तिष्ठन्ति, किन्तु तद्विद्विषां तस्य नन्दस्य विद्विषां शत्रूणां भृत्यः दासः

प्रकाशम्। भो विष्णुगुप्त! उपानय खड्गम्। नमः सर्व-कार्य्यप्रतिपत्तिहेतवे सुहृत्स्नेहाय। का गतिः। एष सज्जो-ऽस्मि।

चाण। सहर्षं खड्गमर्पयित्वा। वृषल! वृषल! अमात्यराक्ष-सेनेदानीं गृहीतशस्त्रेणानुगृहीतः। दिष्ट्या वर्द्धते भवान्।

राजा। आर्य्यप्रसाद एष चन्द्रगुप्तेनानुभूयते।

प्रविश्य पुरुषः। जअदु जअदु अज्जो। अज्ज! एसो क्खु भद्दभडभाउराअणप्पमुहेहिं संजमिअकलचलणो मलयकेदु पडिहारभूमिए अवत्थापिदो, ता एवं सुणिअ, अत्त अज्जो पमाणं त्ति (३२)।

---

(३२) जयतु जयत्वार्य्यः। आर्य्य! एष खलु भद्रभटभागुरायण-प्रमुखैः संयमितकरचरणो मलयकेतुः प्रतिहारभूमौ अवस्थापितः, तस्मा-दिदं श्रुत्वा आर्य्यः प्रमाणमिति।

---

असि भवामि, ये द्रुमाः मलयकेतुप्रभृतिरूपाः स्वयमेव पाणिपयसा हस्तरूपजलेन सिक्ताः वर्द्धिताः ते एव छेद्याः विनाश्याः। तथा सक्रो-धेन सता भिन्नशरीरकेषु बन्धुवर्गशरीरेषु शस्त्रं व्यापारणीयं चाल-नीयं प्रभुपारतन्त्र्यादिति भावः। कार्य्याणां गतयः विधेः भाग्यस्यापि आलोचनागोचरं विचारविषयतां न यान्ति, कार्य्यमत्या सर्वमेव अक-र्त्तव्यं कर्त्तव्यं कर्त्तव्यमकर्त्तव्यं नात्र विचार्य्यतेति भावः। शार्दूलविक्री-डितं वृत्तम्।

चाण। आं श्रुतम्। भद्र! निवेद्यताममात्यराक्षसाय, अयमिदानीं राजकार्य्यं करिष्यति।

राक्ष। स्वगतम्। कथं, दासीकृत्येदानीं विज्ञापनाय मां मुखरीकरोति कौटिल्यः? का गतिः। प्रकाशम्। राजन्! चन्द्रगुप्त! विदितमेव यथा वयं मलयकेतौ किञ्चित् कालान्तरमुषिताः, तत् परिरक्ष्यन्तामस्य प्राणाः।

राजा। चाणक्यमुखमवलोकयति।

चाण। वृषल! प्रतिमानयितव्योऽयममात्यराक्षसस्य प्रथमः प्रणयः। पुरुषमवलोक्य। भद्र! मद्वचनादुच्यन्तां भद्रभटप्रभृतयः, अमात्यराक्षसविज्ञापितो देवश्चन्द्रगुप्तः प्रयच्छति मलयकेतवे पितृमेव विषयम्, अतो गच्छन्तु भवन्तः सहानेन, प्रतिष्ठिते चास्मिन् पुनरागन्तव्यम्।

पुरु। जं अज्जो आणवेदि त्ति (२३)।

चाण। तिष्ठ तावत्। भद्र! भद्र! एवमपरमुच्यतां विजयपालो दुर्गपालश्च, अमात्यराक्षसस्य गृहीतशस्त्रस्य प्रीत्या देवश्चन्द्रगुप्तः समाज्ञापयति, एष तावत् श्रेष्ठी चन्दनदासः पृथिव्यां सर्वेषु नगरेषु श्रेष्ठिपदमारोप्यतामिति।

पुरु। जं अमच्चो आणवेदि त्ति (२४)। निष्क्रान्तः।

चाण। चन्द्रगुप्त! किं ते भूयः प्रियं करोमि?

राजा। किमतःपरं प्रियमस्ति?

---

(२३) यदार्य्य आज्ञापयति इति।

(२४) यदमात्य आज्ञापयति इति।

राक्षसेन समं मैत्री, राज्ये चारोपिता वयम् ।
नन्दाश्चोन्मूलिताः सर्वे, किं कर्त्तव्यमतःपरम् ? ॥ १७ ॥

चाण । विजये ! उच्यतां दुर्गपालो विजयपालश्च, अमात्यराक्षसपरिग्रहेण प्रीतो देवश्चन्द्रगुप्तः समाज्ञापयति, विना हस्त्यश्वं क्रियतां सर्वबन्धमोक्ष इति । अथवा, अमात्यराक्षसे नेतरि किं हस्त्यश्वेन प्रयोजनम् ? तदिदानीं,

सह वाहनहस्तिभ्यां मुच्यतां सर्वबन्धनम् ।
पूर्णप्रतिज्ञेन मया केवलं बध्यते शिखा ॥ १८ ॥

इति शिखां बध्नाति ।

प्रती । जं अज्जो आणवेदि त्ति (३५) । निष्क्रान्ता ।

चाण । अमात्य ! राक्षस ! तदुच्यतां, किं ते भूयः प्रियमुपकरोमि ?

राक्ष । किमतःपरमपि प्रियमस्ति ? यदि न परितोषः, तदिदमस्तु भरतवाक्यम् ।

वाराहीमात्मयोनेस्तनुमतनुबलामास्थितस्यानुरूपां
यस्य प्राग्दन्तकोटिं प्रलयपरिगता शिश्रिये भूतधात्री ।

---

(३५) यदार्य्य आज्ञापयति इति ।

---

(१८) सहेति । वाहनहस्तिभ्यां वाहनेन अश्वेन हस्तिना च सह सर्वबन्धनं सर्वेषां बन्धनं मुच्यतां, केवलं पूर्णप्रतिज्ञेन मया शिखा बध्यते । पथ्यावक्त्रम् ।

म्लेच्छैरुद्वेज्यमाना भुजयुगमधुना पीवरं राजमूर्त्तेः
स श्रीमद्वन्धुभृत्यश्चिरमवतु महीं पार्थिवश्चन्द्रगुप्तः ॥ १९ ॥

इति निष्क्रान्ताः सर्व्वे ।

इति सप्तमोऽङ्कः ।

इति श्रीविशाखदत्तविरचितं मुद्राराक्षसं नाटकं समाप्तम् ।

---

(१९) वाराहीमिति । प्रलयपरिगता प्रलयनिमग्ना भूतधात्री पृथिवी प्राक् पुरा अनुरूपां योग्याम् अतनुबलां महाबलां वाराहीं वराहस्य इयं वाराही तां शौकरीं तनुम् आस्थितस्य यस्य आत्मयोनेः दन्तकोटिं दंष्ट्राग्रम्, अधुना म्लेच्छैः राजभिः उद्वेज्यमाना उत्पीड्यमाना सती यस्य राजमूर्त्तेः राजमूर्त्तिधरस्य चन्द्रगुप्तस्य भुजयुगं शिश्रिये स पार्थिवश्चन्द्रगुप्तः श्रीमद्वन्धुभृत्यः श्रीमन्तः बन्धवः भृत्याश्च यस्य तादृशः सन् चिरं महीं पृथिवीम् अवतु रक्षतु । स्रग्धरावृत्तम् ।

इति श्रीजीवानन्दविद्यासागर भट्टाचार्य्येण विरचिता
मुद्राराक्षसविवृतिः समाप्ता ।

---

প্রিণ্টর—শ্রীক্ষেত্রমোহন মুখোপাধ্যায়
২০ নম্বর শ্যামাপুকুর লেন।

